अत्यर्थं परदास्यमेत्य निपुणं नीतौ मनो दीयते
देवः स्वर्गगतोऽपि शात्रववधेनाराधितः स्यादिति ॥ ६ ॥ ३४ ॥

आकाशमवलोकयन् सास्रम् ।

भगवति कमलालये भृशमगुणज्ञासि । कुतः ।

आनन्दहेतुमपि देवमपास्य नन्दं
रक्तासि किं कथय धिक्कृतमौर्यपुत्रे ।
दानाम्बुराजिरिव गन्धगजस्य नाशे
तत्रैव किं न चपले प्रलयं गतासि ॥ ७ ॥ ३५ ॥

अपि च । अनभिजाते ।

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः
पतिं पापे मौर्यं यदसि कुलहीनं वृतवती ।
प्रकृत्या वाकाशप्रभवकुसुमप्रान्तचपला
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी ॥ ८ ॥ ३६ ॥

अपि च । अविनीते । तदहमाश्रयोन्मूलनेनैव त्वामकामां करोमि । विचिन्त्य । मया तावत् सुहृत्तमस्य चन्दनदासस्य गृहे गृहजनं निक्षिप्य नगरान्निर्गच्छता न्याय्यमनुष्ठितम् । किं कारणमिति । कुसुमपुराभियोगं प्रत्यनुदासीनो राक्षस इति तत्रस्थानामस्माभिः सहैककार्याणां देवपादोपजीविनां नोद्यमः शिथिलीभविष्यति । चन्द्रगुप्तशरीरमभिद्रोग्धुमसत्प्रयुक्तानां तीक्ष्णरसदादीनामुपं-

१ दीयते] नीयते N.—२ °वधैः L.—३ आकाशे M; आकाशमेव P.—४ Bi om. कुतः.—५ °सेतुम् Bi.—६ नन्दमपास्य देवम् P M.—७ सक्ता M L; धिक्कृत°] N; दत्तक° M; दुःकुल° Bi; वैरिणि all other Mss.—८ मत्तगजस्य N.—९ अनार्ये N.—१० कुल°] गुण° Bi.—११ कृतवती P M ed I, II. V.—१२ प्रकृत्यैवा° b Bi.—१३ प्रान्त] प्राय P प्रावि b.—१४ N om. अपि च; Haag proposes to omit अपि च अविनीते; Dhruva अयि अविनीते.—१५ M om. तद्; अहमयम् Be.—१६ त्वाम्] भवतीम् K; असकामाहं करिष्यामि N.—१७ निष्कामता P.—१८ किं कारणम्] कुतः ed. III.—१९ सहैककर्मणां K.—२० देवपादपद्मोप° N.—२१ भविष्यतीति ed. I, II.; advocated by Haag.—२२ °दाद्दीनां N K M l, दायिनां P Bi; दानां b; indistinctly Be.—२३ °उपग्रहार्थं P.

संग्रहार्थं प्रकृत्युपजापार्थं च महता कोषसंचयेन स्थापितः शकटदासः । प्रतिक्षणमरातिवृत्तान्तोपलब्धये तत्संघातभेदाय च व्यापारिताः सुहृदो जीवसिद्धिप्रभृतयः । तत् किमत्र बहुना ।

इष्टात्मजः सपदि सान्वय एव देवः
शार्दूलपोतमिव यं परिपुष्य नष्टः ।
तस्यैव बुद्धिविशिखेन भिनद्मि मर्म
वर्माभवेद्यदि न दैवमदृश्यमानम् ॥ ९ ॥ ३७ ॥

ततः प्रविशति कञ्चुकी ।

कञ्चुकी ।

कामं नन्दमिव प्रमथ्य जरया चाणक्यनीत्या यथा 1
धर्मो मौर्य इव क्रमेण नगरे नीतः प्रतिष्ठां मयि ।
तं संप्रत्युपचीयमानमपि मे लब्धान्तरः सेवया
लोभो राक्षसवज्जयाय यतते जेतुं न शक्नोति च ॥ १० ॥ ३८ ॥

इदममात्यराक्षसगृहम् । यावत्प्रविशामि । परिक्रम्योपसृत्य च । स्वस्ति भवते ।

---

१ प्रकृत्युपजापार्थं P, परकृत्यपक्षोपग्रहार्थं N, परकृत्योपजापार्थं b ed II-V परकृत्यपक्षोपजापार्थं ed I °कृत्योपक्षेपसंग्रहार्थं Bo 1 Telang's E G, परपक्षोपजापार्थं M B1, om in K.—२ सन्स्थापित N—३ वृत्तान्त] वृत्त L—४ तत्संहतिभेदाय N b महतिभेदनाय Bo 1 B1—५ च] om in P मया B1—६ P L K om अत्र; बहुना] अधुना K.—७ देव] नन्द P—८ परिपोष्य N M L—९ भिनत्ति P—१० न यदि Bo M.—११ अदृश्यमानम् N P K Be अदृश्यरूप b M L अमृष्यमाण ed II, अमृष्यमाण 1 B1 ed V—१२ क नाट्येन परिक्रम्य इदममात्यराक्षसस्य गृहं यावत्प्रविशामि B1—१३ जरसा P—१४ क्रमेण] Telang's M II प्रसह्य—१५ अपि] अनु L—१६ जयाय P Bo L 1 B1 ed II V all other MSS चिराय—१७ च] तम् L—१८ अयमसौ राक्षसो यस्याहमप्रेषित परिक्रम्य etc N परिक्रम्योपसृत्य च । इदममात्यराक्षसगृहमुपविशामि । प्रविशामि । जयत्वमात्यराक्षस b नाट्येनावलोक्य । अयमसौ राक्षस । स्वस्ति भवते K, परिक्रम्योपसृत्य च स्वस्ति भ° Be, उपसृत्य only M दृष्ट्वा । अयममात्यराक्षस । परिक्रम्योपसृत्य च । अमात्य स्वस्ति भवते ed I II, परिक्रम्योपसृत्य च । इदम° गृहम् ( यावत् 1 ) प्रविशामि । प्रविश्यावलोक्य ( विलोक्य 1 ) च स्वस्ति etc ed III L 1 परिक्रम्योपसृत्य । इदममा° शामि । प्रविश्यावलोक्य च B1

राक्ष । आर्य अभिवादये । प्रियंवदक आसनमानीयताम् ।

पुरु । एदं आसणं । उवविसदु अज्जो ।

कञ्चु । नाट्येनोपविश्य । अमात्य कुमारो मलयकेतुरमात्यं विज्ञापयति । चिरात्प्रभृत्यार्यः परित्यक्तोचितशरीरसंस्कार इति पीड्यते मे हृदयम् । यद्यपि स्वामिगुणाः न शक्यन्ते विस्मर्तुं तथापि मद्विज्ञापनां मानयितुमर्हत्यार्यः । इत्याभरणं दर्शयित्वा । अमात्य इदमाभरणं कुमारेण स्वशरीरादवतार्य प्रेषितं धारयितुमर्हत्यार्यः ।

राक्ष । आर्य जाजले विज्ञाप्यतामस्मद्वचनात् कुमारः । विस्मृता भवद्गुणपक्षपातिना मया स्वामिगुणाः । किं तु

न तावन्निर्वीर्यैः परपरिभवाक्रान्तिकृपणैः
वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनाम् ।
न यावन्निःशेषक्षपितरिपुचक्रस्य निहितं
सुगाङ्गे हेमाङ्कं नृवर तव सिंहासनमिदम् ॥ ११ ॥ ३९ ॥

---

१ P om. आर्य; आर्य जाजले Be l Bi ed. I. II —२ आर्ति° om. अत्रभवतः ins. in N Be M l; उपनय K; अत्रोपनय ed. I; अत्रभवत उपनय Bi ed II, कञ्चु° । स्वस्ति भवेत् । राक्ष° । प्रियंवदकासनमानीयताम् b —३ उअविसदु K Ch; उप° K; उपविसदु b, एत्थ आसने उपविसदु N; उवेपविसदु Bi.—४ after उपविश्य P b l insert रा° । किमागमनप्रयोजनम् । क°.—५ P om. अमात्य.—६ K Be Ch om. कुमारो.—७ अमात्यं ] त्वां ( before मलयकेतुः) Ch; अमात्यराक्षसं P—८ Ch Be om. आर्यः.—९ परित्यक्त°] परिहृत K.—१०°उपचित° P—११ b om. °शरीर°—१२ °संस्कार] परिष्कार Ch —१३ खिद्यते मे शरीरं P.—१४ N Be Bl ins. सहसा after °गुणाः; M after न; b after यद्यपि.—१५ विस्मर्तुं न शक्यन्ते K Ch Be—१६ मानमतु l.—१७ Be Ch M om. अमात्य.—१८ आभरणानि° प्रेषितानि b L ed. I-III.— स्वशरीरादवतार्य कुमारेण N b Ch (च शरी°); शरीरादवतार्य कु° Be M Bi: स्व° क° अ° K.—१९ आर्याय प्रेषितं P.—२० तत्परिदधात्वार्यः K Ch (orig)—२१ P om. जाजले; आर्य कञ्चुकिन् N.—२२ विज्ञप्यताम् N; उच्यताम् K Ch.—२३ मे भवद्गु° पातेन N Be l, स्वामिगुणा भवद्गु° पातिना मे हृदयेन K Ch; मया भवद्गु° M; °पातेन L (मया om.); एव भवद्गु° b, मे भगवद्गुणापेक्षया Bi.—२४ आक्रान्ति] °क्लान्ति N P Ch, °क्लेश K; आक्रान्ति° Grah.—कृपणैः] निपुणैः P.—२५ °क्षपित° N b K Ch L; क्षापित Bi.—२६ चक्रस्य] पक्षस्य N.—२७ सगाङ्गे P (in marg क्षितिगृहे) K; सुगाङ्गे N b Be M Bi Grab; सुगाङ्गे Ch.—२८ °ङ्क° N P(?) हेमाङ्कं सुवर्णघटितम् Grab.

कञ्चु। अमात्ये नेतरि सुलभमेवत् कुमारस्य। तत् प्रतिमान्यतां कुमारस्य प्रथमः प्रणयः।

राक्ष। आर्य[6] कुमार इवानतिक्रमणीयवचनो भवानपि। तदनुष्ठीयतां कुमारस्याज्ञा।

कञ्चु। नाट्येन भूषणानि परिधाप्य। स्वस्ति भवते। साधयाम्यहम्।

राक्ष। आर्य अभिवादये।

कञ्चु। निष्क्रान्तः।

राक्ष। प्रियंवदक ज्ञायतां[13] को ऽस्मद्दर्शनार्थी[14] द्वारि तिष्ठति[15]।

पुरु। जं अज्जो आणवेदि। इति निष्क्रम्य आहितुण्डिकं दृष्ट्वा। अज्ज को तुमं।

आहि। भद्द अहं खु आहितुण्डिओ जिण्णविसो णाम[22]। इच्छामि[23] अमच्चरक्खसस्स पुरदो सप्पेहिं खेलिदुं[26]।

---

१ अमात्य अमात्ये Be, अमात्य नेतरि [in marg त्वयि] Ch.—२ सर्वमपि सुलभं P.—३ कुमारस्य] कुमारेण N K Be, N adds अवगम्यते after it.—४ प्रतिमन्यतां Be, खलु मान्यतां Bi.—५ अयमप्रथमः N.—६ आर्य तिष्ठतु कुमारः K.—७ कुमार इव] कुमारवद् Be कुमारादपि Bi.—८ °वचनो मे भवान् K Be Ch Bi, °शासनो भवान् M.—९ अनुष्ठीयते कुमाराज्ञा Be.—१० आभरणानि N, नाट्येन भूषयित्वा M.—११ साधयाम्यहं स्वाधिकारं N, गच्छाम्यहमितः P.—१२ K om. this line, गम्यतामार्याभिवादये M, ed. I. II add कञ्चु° स्वनियोगं साधयाम्यहमिति सस्पृहो निष्क्रान्तः.—१३ को ऽयम् ed. I. II, कोऽपि Bo (see h.), N K Ch have कः after द्वारि; M before it.—१४ °दर्शनाकांक्षी K Ch.—१५ तिष्ठतीति M.—१६ अज्जो] देवो K अमच्चो M.—१७ निष्क्रम्य] परिक्रम्य P; आहितुण्डिकं प्रतिपृच्छति Be, पृच्छति L.—१८ णं अज्ज ed. I. II, अज्ज om. in P, भद्द Bo I instead of अज्ज.—१९ तुमं ति Be, तुवं M.—२० भद्द om. in K.—२१ खु P आहि° अहं M.—२२ जिण्णविसो णाम om. in Bo M I Bi; जुण्णविसो My.—२३ इच्छेमि L.—२४ I, Ch M Bo om. °रक्खस°.—२५ पुरओ N, सप्पेहि M (which often om. the Visarga).—२६ कीलिदुं K M ed. I. II.

पुरु । चिट्ठ[1] ताव जाव[2] अमच्चस्स णिवेदेमि । राक्षसमुपसृत्य । अज्ज[3] एसो क्खु सप्पोजीवी[4] इच्छदि[5] अमच्चस्स[6] पुरदो सप्पेहिं खेलिदुं[7] ।

राक्ष । वामाक्षिस्पन्दं[8] सूचयित्वा आत्मगतम् । कथं । प्रथममेव[9] सर्पदर्शनम् । प्रकाशम् । प्रियंवदक न नः कुतूहलं[10] सर्पेषु[11] । तत्[12]परितोष्य विसर्जयैनम् ।

पुरु । जं अज्जो[13] आणवेदि । निष्क्रम्य आहितुण्डकमुपसृत्य[14] । अज्ज[15] अदंसणेणावि अज्जो पसादं करेदि ण उण[16] दंसणेण ।

आहि[17] । भद्द[18] । विण्णवेहि मह[19] वअणेण अमच्चं । ण केवलं[20] अहं[21] सप्पोजीवी[22] ।

---

१ K ins भद्द before चिट्ठ —२ दाव जाव N K Be M Bi, ताव जाव b, चिट्ठदु दाव तुमं अमच्चे ण° P, चिट्ठ दाव अ° Ch, अ °रक्खसं N —तिष्ठतु भवान् यावदमात्यराक्षसस्थाने (?) निवेदयामि Grab (In correlative clauses ताव instead of दाव; see Index of Prakrit words)—३ अज्ज] अमच्च b Be M Bi, । खु Be M —४ सप्पोपजीवी ed I. II. Grab सप्पाजीवी Ch, सप्पजीवनो M —५ इच्छसि M —६ अमच्चस्स पुरदो om in Be Bi, अज्जस्स N —७ इच्छदि after खेलिदुं N, कीलिदुं M, सप्पं दंसेदुं L, दसिदुं K Ch. सप्पाणं अम° पु° दंसेदुं ed I, इच्छति अ° पु° सर्पै. क्रीडितुं दर्शयितु च Grab —८ स्पन्दन Be M ( om आत्मगतं ) —९ प्रथमम् ] मातर् l, आ प्रथममेवाहिदर्शनम् Bi । पुव तावद् P —१० कुतुहलं ed I. II, कौतूहलं Bi Be ed. III, कौतुकं b —११ सर्पेषु] सर्पदर्शने Be Bi l ed II, ed I. II ins before it अस्ति —१२ तत्] इत. Be —१३ अज्जो] अमच्चो Be M. —१४ उपसृत्य] उपेत्य M —१५ अज्ज] भद्द b ed I II —१६ उण] दे P, om in b, पुण Be, एसो खु दंसणहलेण दे अमच्चो° N, एसो [illegible] दे सप्पदंसणेण विना अमच्चो° b, एसो क्खु दे अमच्चो सप्पदंसणपसाअं° K, एसो क्खु अदंसणफलेण ते अमच्चो° Be, एसो क्खु दे जं अम° दंसणेण पसाअं करेदि त अदंसणेण Ch, दंसणफलेण दे अमच्चो प° करेइ M, एसो खु दे दंसणकज्जेण अमच्चोपसादं करेदि ण उण सप्पदंसणेण L, एसो अदंसणेण फलेण l, दे अदसणेण अज्ज अमच्चो पसादं करेदि ण उण सप्पदंसणेण Bi, आर्यो मन्त्रिराक्षसोदर्शनेनैव प्रसादं करोति न पुनर्दर्शनेन Grab । एसो क्खु दे अमच्चो अदंसणेण फलं देदि ण पुण° ed I, एसो क्खु दे अमच्चो [फलं देदि] [पसादं करेदि] ण उण ed II, एसो [illegible] दे दंसणकज्जेण अमच्चो° ण उण सप्पदंसणेण ed III; एसो खु दे दंसणफलेण अमच्चो° ed V —१७ M om the text from आहि as far as अमच्चं, अहि° P.—१८ Ch om. भद्द, भद्दमुह b —१९ मह Be l Bi, मे P, मम N b K Ch.—२० एवलं P.—२१ P Ch Be M Bi om अहं.—२२ सप्पोवजीवी N ed I II, सप्पाजीइ अवि अ Ch, सप्पोपजीवनो M, उण after it in Bi । पाउअकवि P b K Bi, पाइअकइवि (? N,) पायडकवि Bc, पाउअकई Ch, पाअडकई M; पाउअकवी l ed I. II V, पाउडकवी ed III. L, no Mss has पाउद° (Pischel § 53)

पाउडकवि क्खु अहं । ता जइ[1] मे[2] दंसणेण अमच्चो[3] पसादं[4] ण करेदि[5] ता एदं पि[6] पत्तअं[7] वाचेदुं[8] पसीददु त्ति[9] । पत्रमर्पयति ।

पुरु । पत्रं गृहीत्वा[10] राक्षसमुपसृत्य । अमच्च[11] एसो[12] क्खु सप्पजीवी[13] विण्ण-वेदि[14] । ण केवलं[15] अहं[16] सप्पजीवी[17] । पाउडकवि[18] क्खु अहं । ता जइ[19] मे[20] दंसणेण[21] अमच्चो पसादं[22] ण करेदि[23] ता[24] एदं पि[25] पत्तअं[26] वाचेदुं[27] पसीददु त्ति ।

राक्ष । पत्रं गृहीत्वा वाचयति[28] ।

पाऊण णिरवसेसं[29] कुसुमरसं अत्तणो[30] कुसलआए[31] ।
जं उग्गिरेइ[32] भमरो तं अण्णाणं कुणइ कज्जं ॥ १२ ॥ ४० ॥

विचिन्त्य । आत्मगतम्[33] । अये[34] कुसुमपुरवृत्तान्तज्ञो ऽहं भवत्प्रणिधिश्चेति[35] गाथार्थः । कार्य[36]व्यग्रत्वान्मनसः प्रभूतत्वाच्च प्रणिधीनां विस्मृतम्[37] । इदानीं स्मृति-

१ जदि N Bo—२ मे ] मम P K मह Be; om. in N.—३ अमच्चो ] अज्जो P.—४ पसाअं K । ण दंसणेण प° मे N, अदंसणेण Ch; दंसणेण विणा Bi ( omitting ण before करेदि)—५ करेइ M.—६ Be Bi om. पि; पि दाव N.—७ पत्तं Ch—८ वाचेदु b K Bo Ch; वाचेदुं पसादेदु॰त्ति M; वाचिअ पसादं क° Bi—९ त्ति om. in P, पत्रमर्पयति om. in P Bo M—१० पत्रं गृहीत्वा om in Be । उपेत्य M—११ अमच्च om. in N—१२ एसो om. in Ch M, क्खु N b—१३ सप्पजीवी] सप्पोपजीवनो M, आहितुण्डिओ b Be Ch; आहितु° जिण्णविसो K—१४ अमच्चं विण्णवेदि b Be Bi ed. III—१५ण एवलं P—१६ अहं om. in P Ch Bi—१७ सप्पोवजीवी N Grah ( उप° ); सप्पाजीइ Ch—१८ पाउअकवि P b K; पाइअकइवि N; पायइकवि Be, पाउअकइ Ch, ण केवलमित्यादि पठति M; सप्पजीवी क्खु अहं दण पाउअकवि Bi, क्खु N b—१९ जदि N.—२० मम K, om. in Be Ch; अज्जो अमच्चो P.—२१ अम° ण दंसणेण पसादं मे N, अदंसणेण Ch, अमच्चो दंसणेण पसादं न करेदि Bi; अदर्शनेन यद्यमात्यः प्रसादं करोति Grah.—२२ पसाअं K Ch.—२३ करेदु K.—२४ तदो Bo Bi.—२५ पि om. in Bo Bi.—२६ पत्तअं Be पत्तं Ch Bi —२७ वाचिअ Bi.—२८ आत्मगतं वाचयति P.—२९ णीरव-सेसं Be, णि° Ch.—३० अप्पणो Ch, ( see b स )—३१ °लदाए all Mss, कुसुमलदाए P K.—३२ उग्गिरन्ति भमरा N M Bi, उग्गिरेन्ति b, उग्गिरइ भमरो P, उग्गिरेइ ममरो K Bo Ch L l, ed. V, यदुद्गिरति Rat, यदुद्गिरति Grah. यदुद्गिलति Vat. तं अण्णाणं कुणइ कज्जं P Bo M, कुणन्ति तक्कज्जं N, जं अ° कुणइ कज्जं K; तं कुण्णइ कज्जं Ch, कुणति तं कज्जं L; तदन्येषां करोति कार्यं Grah.—३३ आत्मगतं om. in P K Ch Bi—३४ अये om. in M; अए Be Ch, अतो Bi—३५ स्मत्प्रणिधिश्चेति P Bo Bi; भवतः N, च] N एव; Ch om.—३६ अथ कार्यं Ch, आ कार्य° M; आः कार्यं Bi ed. I. II. अतिव्यग्र° K—३७ विस्मृतं] om. in N K Bo Bi, न ज्ञायते Ch.

रुपलब्धा । व्यक्तमाहितुण्डिकच्छद्मना विराधगुप्तेनानेन[2] भवितव्यम् । प्रकाशम् । प्रियंवदक प्रवेशयैनं । सुकविरेषः । श्रोतव्यमस्मात्[3] सुभाषितम्[4] ।

पुरु । जं अज्जो[5] आणवेदि । आहितुण्डिकमुपसृत्य । उवसप्पदु[6] अज्जो । आहि[7] । नाट्येनोपसृत्यावलोक्यात्मगतम्[8] । अये अयममात्यराक्षसस्तिष्ठति[10] । स एषः[11]

वामां बाहुलतां निवेश्य शिथिलां[12] कण्ठे विवृत्ताननां[13]
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः ।
गाढालिङ्गनसङ्गपीडितमुखं[17] यस्योद्यमाशङ्किनी[18]
मौर्यस्योरसि नाधुनापि कुरुते वामेतरं श्रीः स्तनम् ॥ १३ ॥ ४१ ॥

प्रकाशम् । जअदु जअदु अज्जो[21] ।

राक्ष । विलोक्य । अये[22] विराध । इत्यर्धोक्ते । विरूढश्मश्रुः । प्रियंवदक भुजङ्गैरिदानीं विनोदैः । तद्विश्रम्यतां परिजनेन । त्वमपि स्वमधिकारमशून्यं कुरु ।

पुरु । जं अमच्चो आणवेदि । इति सपरिजनो निष्क्रान्तः ।

---

१ कुसुमपुरादागतेन वि° ed. I. II. °गुप्तकेन P.—२ अनेन om. in M.—३ अस्माभिः M.—४ सुभाषितं भवति Ch.—५ अमच्चो M Bi । निष्क्रम्याहितु° Be M; अहितु° P त्ति निष्क्रान्तः Ch.—६ उप° N b Bi; उअसरदु K; विशदु अज्जो Ch.—७ अहि°P.—८ प्रविश्य N P; विलोक्य N Be M ( adding च ) Bi.—९ अयमसौ N.—१० तिष्ठति om. in b K Be Ch Bi—ed. I. II. ins. संस्कृतमाश्रित्य after तिष्ठति; L after विलोक्य.—११ स एषः] om. in Ch Be Bi; यस्य चन्द्रगुप्तगता लक्ष्मीर्भवदीया । कुतः N; य एष M.—१२ शिथिला N; शिथिलं b Be (orig.) M; ed. II. III. V.—१३ विवृत्ताननां K; निवृत्ता° b Bi ed. III.—१४ बलेन विधृताप्यङ्के पतन्ती N.—१५ अङ्के Bi.—१६ चलन्त्या K.—१७ °मुखी K; पीडनमुखं N b, °संगकातरमुखी Ch °सुखं ed. II.—१८ यस्येदमाशङ्किनी N.—१९ श्रिस्तलं P; श्रीस्तलं K.—२० जयदु Be Ch; जेदु M.—२१ अज्जो] अमच्चो K b Ch M Bi.—२२ P om. अये; विराधगुप्त N P M Bi.—अर्धोक्ते N b.—२३ विरूढस्मृतिः ed. I. II. V. against the best Mss.; विरूढस्मश्रो Bi; प्ररूढश्मश्रुः L; °श्मश्रुरयं Ch श्मश्रुरिति विहस्य M.—२४ भुजगैः P Ch Bi.—२५ विनोदो नः N; न विनोदः Ch; विनोदयामः l Bi ed. II. V. विनोदयितव्यम् ed. III. L.—२६ तद् ] तावद् Bi.—२७ विश्रम्यताम् ] विश्राम्य° N; विरम्यतामितः P K; निष्क्रम्यतामितः M.—२८ नः परिजनेन Be Bi; परिजनेन सह P M—२९ स्वनियोगम् P; स्वाधिकारम् Ch ति [नि] योगम् M.—३० अशून्यं कुरु] अनुतिष्ठ N.—३१ सपरिवारो b.

राक्ष । सखे विराधगुप्त । इदमासनम् । आसताम् ।

विरा । यदाज्ञापयत्यार्यः । इति नाट्येनोपविष्ट ।

राक्ष । निर्वर्ण्य । अहो देवपादपद्मोपजीविनो जनस्यावस्था । इति रोदिति ।

विरा । अमात्य अलं शोकेन । नातिचिरादमात्योऽस्मान् पुरातनीमवस्थामारोपयिष्यति ।

राक्ष । सखे विराधगुप्त । वर्णयेदानीं कुसुमपुरवृत्तान्तम् ।

विरा । अमात्य विस्तीर्णः कुसुमपुरवृत्तान्तः । तत् कुतःप्रभृति कथयामि ।

राक्ष । सखे चन्द्रगुप्तस्यैव तावन्नगरप्रवेशात्प्रभृति मत्प्रयुक्तैस्तीक्ष्णरसदादिभिः किमनुष्ठितमिति श्रोतुमिच्छामि ।

विरा । एष कथयामि । अस्ति तावच्छकयवनकिरातकाम्बोजपारसी-

---

१ P Ch (in marg ) ins विलोक्य before सखे —२ यद् ] यथा P K । नाट्येनोपसृत्योपविष्ट K —३ निर्वर्ण्य ] सबाष्प b P, सखेद निर्वर्ण्य ed I. II.—४ देवस्य K, देवस्य नन्दस्य Ch —५ पद्म om in P Be M —६ इयमवस्था M l B1 ed I II, अवस्थेयम् ed III —७ अति om in K —८ अस्मान् पुन N, अस्मासु B1, अस्मान्पुन ed I. II —९ अवस्थाम् ] दशाम् N —१० M om सखे —११ वर्णय ] कथय K Ch —१२ K Ch om इदानीम् —१३ °वृत्तान्त विस्तीर्ण तत्कुत N —१४ तत् ] तदा M —१५ आज्ञापय कुत K Ch M B1, °पयतु कुत b Be —१६ कथयामि ] वर्णयामि ed III L —१७ चन्द्रगुप्तहतकस्यैव Ch.—१८ P K Ch B1 om तावत् —१९ मत् ] अस्मत् P b K Be l B1 —२० प्रयुक्तै ] प्रणिधिभि ed I II, प्रयुक्तैश्च P —२१ M om तीक्ष्ण —२२ रसदै P Be B1, रसदाद्यै M l, रसनै (!) b °दीभि (!) K, °दादिभि N Ch (see 42 18) °दायिभि L —२३ इत्यादिश N b l B1, इत्यादि P, तदादिश Ch K Telang s E have only इति, Lasson, Haag and Dhruva have already remarked that the words of Raks asking to relate the events from the entry of Chandragupta are in contradiction with the answer given by the spy who begins his tale with the siege of Kusuma pura. Haag proposes to cancel the passage from अमात्य up to इच्छामि while Dhruva inserts आदि [ इत्यायादिश ] Neither is convincing It seems sufficient to omit with Telang s E and with K the word आदि I have not noted the reading of Be M —२४ सकलकिरातयवन° P, बाह्लीकपारसीक° N बाल्हीकपरानसीक° M, Ch om. पारसीक, Be पारदीक, B1 om. किरात, Be B1 om बाह्लीक

कबाह्लीकप्रभृतिभिश्चाणक्यमतिपरिगृहीतैश्चन्द्रगुप्तपर्वतेश्वरबलैरुदधिभिरिव प्रलयकालचलितसलिलगम्भीरैः समन्तादुपरुद्धं कुसुमपुरम् ।

राक्ष । ससंभ्रमं शस्त्रमाकृष्य । आः मयि स्थिते कः कुसुमपुरमवरोत्स्यति । प्रवीरक प्रवीरक क्षिप्रमिदानीम्

प्राकारान् परितः शरासनधरैः क्षिप्रं परिक्षिप्यतां
द्वारेषु द्विरदैः प्रतिद्विपघटाभेदक्षमैः स्थीयताम् ।
मुक्त्वा मृत्युभयं प्रहर्तुमनसः शत्रोर्बले दुर्बले
ते निर्यान्तु मया सहैकमनसो येषाममीष्टं यशः ॥ १४ ॥ ४२ ॥

विरा । अमात्य अलमावेगेन । वृत्तमिदं वर्ण्यते ।

राक्ष । कथम् । वृत्तमिदम् । मया पुनर्ज्ञातं स एवायं कालो वर्तते । शस्त्रमुत्सृज्य सास्रम् । हा देव नन्द । स्मरति ते राक्षसः प्रसादानां यस्त्वमत्र काले

यत्रैषा मेघनीला चलति गजघटा राक्षसस्तत्र यायाद्
एतत्पारिप्लवाम्भःप्लुति तुरगबलं धार्यतां राक्षसेन ।

---

१ मतिबल M.—२ P om. परि —३ पर्वतक I Be.—४ महाप्रलय° M, प्रलयोच्चसलिलैः L.—५ चलित] कलित N P, उच्चलित ed III -गभीरैः P, गंभीरसलिलैः Ch. सलिलसंचयैः b Be Ml Bi ed I. II, °सलिलैः K ed. III. V.—६ ससंभ्रमं] M om., सक्रोधं K; आः] Be I om., अये Ch L कष्टं भोः कष्टं ससंभ्रमं शस्त्रमाकृष्य मयि° Bı.—७ अपरोत्स्यति M; उपरोत्स्यति P b Bı Bo (°तीति).—८ प्रवीरक ] once only P, वीरकवीरक K Be, वीरक I Bı, विराधगुप्त M instead—९ प्राकारं M L.—१० परिकम्प्यतां L ed III —११ प्रतिद्विप° *Ch M ed III, recommended by Haug cf. Mahābh VII, 96, 11:* गजः प्रतिगजं यथा । the other Mss. परद्विप°—१२ मुक्त्वा ] त्यक्त्वा P L ed. III.—१३ अलमावेशेन Ch Grah.—१४ N om कथं° इदम् ; नि श्चस्य कष्टं वृत्तमिदं b L ed. III; इदम्] एवेदानीम् P—१५ निश्वस्य मया पुनर्ज्ञातं Bı, K om. पुनः; न ज्ञायते P.—१६ अयं om. in K Ch Bı—१७ कालो ] समयो Bı वर्तत इति N M Bı —१८ देव सर्वार्थसिद्धे N M, देव सर्वार्थसिद्धे नन्द K, Ch (sec. h. in marg ) सर्वार्थसिद्धे.—१९ स्मरामि ते राक्षसं प्रति प्रसादातिशयम् L ed III, ते प्रसादानां *Bi*—२० यस्त्वमत्र संग्राम° b, यस्त्वं तत्र काले Ch, यस्त्वमस्मकाले M; यस्त्वमीदृशे काले Bi यस्त्वेवंविधे ed. I II; त्वमत्र संग्रामकाले L. ed. III.—२१ चरति K ed III.—२२ करिघटा K.—२३ एतत् ] यत्तत् *Bı* —२४ अम्भः] अभ्र° N Ch, अंमप्लुत° Be, अभ्रप्लुति Bı —२५ धार्यताम् Ch L ed. III.

पत्तीना राक्षसोऽन्तं नयतु बलमिति प्रेषयन्मेघमाज्ञाम्
अज्ञासीः प्रीतियोगात् स्थितमिह नगरे राक्षसानां सहस्रम् ॥ १५ ॥ ४३ ॥

ततस्ततः ।

विरा । ततः समन्तादुपरुद्धं कुसुमपुरमवलोक्य बहुदिवसप्रवृत्तमति-महदुपरोधवैशसमुपरि पौराणां वर्तमानमसहमाने तस्यामवस्थायां पौरजनापेक्षया सुरुङ्गामेत्यापक्रान्ते तपोवनाय देवे सर्वार्थसिद्धौ स्वामिविरहात् प्रशिथिलीकृतप्रयत्नेषु युष्मद्बलेषु घोषणाव्याघातादिसाहसानुमितेष्वन्तर्नगर-निवासिषु पुनरपि नन्दराज्यप्रत्यानयनाय सुरुङ्गामधिगतेषु युष्मासु चन्द्रगुप्त-निधनाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि पर्वतेश्वरे ।

राक्ष । सखे पश्याश्चर्यम् ।

कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता
हन्तुं शक्तिरिवार्जुनं बलवती या चन्द्रगुप्तं मया ।
सा विष्णोरिव विष्णुगुप्तहतकस्यात्यन्तिकश्रेयसे
हैडिम्बेयमिवेत्य पर्वतनृपं तद्वध्यमेवावधीत् ॥ १६ ॥ ४४ ॥

---

१ अन्तर्नयतु P Bo B1, ऽन्तयश्नयतु M—२ प्रेषयन्] प्रेरयन् P K—३ प्रीतिमयोगात् N, कार्ययोगात् K, स्नेहयोगात् ed I. II—४ इह] इव Ch L—५ कुसुम] पुष्प° ed I. II—६ प्रवृत्तम्] °प्रभृति l Be ed II—७ म् अति om in K, अति om. in l Ch Bc—८ °वैशस° M—९ परिवर्तमानम् b K Be Ch l B1—१० तस्यामपि Pb Be M l, ऽस्यामेव K Ch (see h त), अवस्थाय B1—११ सुरङ्गामेत्य om in N Be M l, सुरङ्गाम् b L, अपक्रान्तेन सुरङ्गाद्वारेण B1—१२ अपक्रान्ते] प्रक्रान्ते N, गते K Ch, K om the text from [ देवे up to ग ] तेषु—१३ परिशिथिली° N, सुशिथिली° ed I II, विरहप्रशिथिलीभूतेषु युष्मद्बलेषु M—१४ बलेषु] प्रयुक्तेषु P—१५ जयघोषणा L ed I—V. ( cf Act III, v 26 ), जयाघोषणा° L, आघोषणा b—१६ व्याघात] घात M—१७ अनुमितेषु] अनुष्ठितेषु b, अनुमितोद्विग्नान्तर्नगर° P, अनुगतेषु M, अनुमित° N l B1—१८ निवासिषु] °वासिषु l B1—१९ प्रत्यायनाय P, प्रत्यागमनाय B1—२० सुगाढम् N, सुरङ्गाम् P l, सुरगाम् Be—२१ अधिगतेषु] अतिक्रान्तेषु N, उपगतेषु M, सुरगया बहिरपगतेषु ed III.—२२ युष्मासु] युष्मत्प्रणिधिषु P—२३ °प्रयुक्तया विषकन्यया M—२४ राक्ष° शान्तं पापं सखे P—२५ हन्तुं ] जेतुं M—२६ आत्यन्तिकं N, एकान्तिक° P, उत्पातिकश्रेयसे b, आत्यन्तिकप्रीतये Telang's E—२७ हैडंबेयम् L—२८ इवेत्य] उपेत्य P; इवैत्य M L B1.

विरा । अमात्य दैववशात् कामचारः । किमत्र क्रियते ।

राक्ष । ततस्ततः ।

विरा । ततः पितृवधपरित्रासादपक्रान्ते कुमारे मलयकेतौ विश्वासिते पर्वतकभ्रातरि वैरोधके प्रकाशिते चन्द्रगुप्तस्य नन्दभवनप्रवेशे चाणक्येनाहूयाभिहिताः कुसुमपुरनिवासिनः सर्व एव सूत्रधारा यथा सांवत्सरिकादत्तलग्नवशादद्यैवार्धरात्रसमये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति । अतः प्रथमद्वारात्प्रभृति संस्क्रियतां राजभवनमिति । ततः सूत्रधारैरभिहितम् । आर्य प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशमुपलभ्य सूत्रधारेण दारुवर्मणा कनकतोरणन्यासादिभिः संस्कारविशेषैः संस्कृतं राजभवनद्वारम् । इदानीमस्माभिरभ्यन्तरे संस्कारो विधेय इति । ततश्चाणक्यबटुनानादिष्टेनैव दारुवर्मणा संस्कृतं राजभवनद्वारमिति परितुष्टेन सुचिरं दारुवर्मणः दाक्ष्यमभि-

१ अमात्य om. in K;-तत्किम् Be Bi; अत्र om. in N P K Be M Bi; क्रियताम् N M Bi.—२ ततश्च (sec. h.) P.—३ परि om. in b K Be Ch Bi.—४ अपक्रान्ते कुसुमपुरात् ed. I. II.—५ कुमारे om. in P Ch.—६ M ins. च after विश्वासिते.—७ पर्वतकभ्रातरि] तद्भ्रातरि P.—८ वैरोचके L ed. III.; वैरोचनके l.—९ प्रकाशिते] प्रकासिते N; प्रकाशीकृते ed. II प्रख्यापिते K.—१० प्रवेशे। रा°। ततः ततः। विरा°। ततश्चाण° Pb Bi.—११ चाणक्यहतकेन b M ed. I.-V.—१२ अभिहूय P.—१३ सर्वे कुसुमपुरनिवासिनः Ch; M om. नि.—१४ एव om. in K Ch.—१५ सूत्रधाराः] सूत्रकाराः M.—१६ यथा om. in Be M Bi; यथैवाद्य Ch.—१७ सांवत्सर° P.—१८ °दत्तलग्नवशात्] Telang's E. Ch sec. h; N Ch (orig.) om. दत्तलग्न; P om. दत्त; आदेशात् b Be L l Bi ed. III. V; वचनात् M ed I. II; सांव° वशात् om. in K.—Ch M L om. अद्यैव; b Be Bi om. एव.—१९ अर्धरात्रे P M; एव om. in b Be Bi.—२० Be om. the text from चन्द्रगुप्तस्य to देवस्य.—२१ Nb K Ch M om. इति—२२ ततः b K M.—२३ प्रथमद्वारतः M; पूर्वद्वारप्रवेशात्प्रभृति N; प्रथमद्वारप्रवेशात्प्रभृति P; प्रथमद्वारदेशात् K; पूर्वद्वारात्प्रभृति L; पुरद्वार° l, पुरद्वारप्रवेशात् b Bi.—२४ Ch om. the text from °वनमिति as far as कथ च Act III, after verse १४.—२५ सूत्रकारैर M.—२६ प्रवेशो भविष्यतीति N M.—२७ सूत्रकारेण M.—२८ राजभवनम् N, प्रथमद्वारमिति K; प्रथमराजद्वारं ed. I. II; संस्कृते राजद्वारे Be Bi.—२९ इदानीम्] सांप्रतं Bi.—३० अभ्यन्तरं गत्वा P, आभ्यन्तरम् M.—३१ विधेय] आधेय P L l Bi.—३२ आदिष्टेन Be M; K om. एव.—३३ सूत्रधारेण दारुवर्मणा P, सूत्रकारेण दारु° M.—३४ परितुष्टेनेव M; संतुष्टेनेव Bi.—३५ दारुवर्मणः before सुचिरं Be Bi; om. in M.

प्रशस्यामभिहितम् । अचिरादस्य दास्यस्यानुरूपं फलं दारुवर्माधिगमिष्यतीति ।

**राक्ष** । सोद्वेगम् । सखे कुतश्चाणक्यवटोः परितोषः । अफलमनिष्टफलं वा दारुवर्मणः प्रयत्नमधिगच्छामि यदनेन बुद्धिमोहादथवा राजभक्तिप्रकर्षान्नियोगकालमप्रतीक्षमाणेन जनितश्चाणक्यवटोश्चेतसि चलवान्विकल्पः । ततस्ततः ।

**विरा** । ततश्चाणक्यहतकेनानुकूललग्नवशादर्धरात्रसमये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति शिल्पिनः पौरांश्च गृहीतार्थान् कृत्वा तस्मिन्नेव क्षणे पर्वतेश्वरभ्रातरं वैरोधकमेकासने चन्द्रगुप्तेन सहोपवेश्य कृतः पृथ्वीराज्यविभागः ।

**राक्ष** । किं चातिसृष्टः पर्वतेश्वरभ्रात्रे वैरोधकाय पूर्वप्रतिश्रुतो राज्यार्धः ।

**विरा** । अमात्य अथ किम् ।

**राक्ष** । आत्मगतम् । नियतमतिधूर्तेन वटुना तस्यापि तपस्विनः कमप्युपांशुवधमाकलय्य पर्वतेश्वरविनाशजनितस्यायशसः परिहारार्थमेषा लोकभक्तिरुपचरिता । प्रकाशम् । ततस्ततः ।

---

१ b om अभिप्र, P इति प्रशस्य—२ अनुरूप om in P M—३ दारवर्मा समधिगमिष्यतीति P, दारवर्मसचिराद्दा° तीति K दारवर्मन् फलमधिगमिष्यसि Bo l फल दारवर्मस्य धिगमिष्यसि $B_1$, N om दारवर्मा—४ सोद्भ्रम b सावेग M—५ सखे om in K M $B_1$—६ कुत ] तत M—७ चाणक्यवटोश्चेतासि P—८ अनिष्ट वा K M—९ प्रयत्नम् ] यत्न $B_1$, शिल्प K—१० अवगच्छामि N Be $B_1$ ed I II अप° M—११ यतो N M—१२ °प्रकर्षतो N, राजप्रकर्षे नयता काल्मप्रतीक्ष्य° Be राजभक्ति प्रकर्षं नयता $B_1$, राजकार्यानुरोधात् l—नियोगकालम् ] समयम् $B_1$—१३ अपेक्षमाणेन P—१४ सजनित ed. I II—१५ बलात् P, सुमहान् $B_1$—१६ वितर्क M l (orig)—१७ ततस्तत om in Be—१८ चाणक्यानुकूल° K—१९ पौरा शिल्पिनश्च P—२० गृहीतसमयान् P ed I II—२१ पर्वतकेश्वर° M, पर्वतक° $B_1$—२२ वैरोचकम् ed III (L has °च° throughout) वैरोचनकम् l—२३ चन्द्र° सहैकासने N K M—२४ निवेश्य N M—२५ पृथिवी° Bo M l $B_1$—°राज्यप्रविभाग N Be राज्यार्धविभाग b l—२६ b Be l $B_1$ om च किं नाम K—अनुसृष्ट N—२७ पर्वतकभ्रात्रे N K M—२८ वैरोचकाय ed III—२९ अतिसृष्ट° श्रुतमर्धराज्य M °राज्यार्धं P K, राज्यार्धं N राज्यार्धविभाग b, राज्यार्धप्रविभाग l Be, राज्यार्धभाग $B_1$—३० अमात्य om in P Be M, $B_1$—३१ अतिधूर्तवटुना ed I II अति° चाणक्यवटुना K L, P om वटुना—३२ अपि om in P—३३ तपस्विन om. in M—३४ किमपि K Bo l—३५ विनाश° ] वध° P M.—३६ परीहारा° P, °जनितमयश प्रमार्ष्टुमेषा L—३७ लोकभक्ति Pb K N (?), लोकवृत्ति M, °प्रसिद्धि L l $B_1$ ed II (altern) III. V, °प्रतिभक्ति ed. I, ed II alternatively—३८ उपचरिता ] उपचिता N K L ed III, उपरचिता M l $B_1$

**विरा ।** ततः प्रथममेव प्रकाशिते रात्रौ चन्द्रगुप्तस्य नन्दभवनप्रवेशे कृताभिषेके च हिमविमलमुक्तागुणपरिक्षेपोपरचितपट्टमयवारबाणप्रच्छादितशरीरे मणिमयमुकुटनियमितरुचिरतरमौलौ सुरभिकुसुमवैकक्षिकावभासितवक्षःस्थले परिचितजनैरप्यनभिज्ञायमानाकृतौ चाणक्यहतकस्याज्ञया चन्द्रगुप्तोपवाह्यां चन्द्रलेखां नाम गजवशामारुह्य चन्द्रगुप्तानुयायिना राजलोकेनानुगम्यमाने देवस्य नन्दस्य भवनं प्रविशति वैरोधके युष्मत्प्रयुक्तेन सूत्रधारेण दारुवर्मणा चन्द्रगुप्तोऽयमिति मन्यमानेन वैरोधकस्योपरि पातनाय सज्जीकृतं यन्त्रतोरणम् । अत्रान्तरे बहिर्निगृहीतवाहनेषु स्थितेषु चन्द्रगुप्तानुयायिषु भूमिपालेषु युष्मत्प्रयुक्तेनैव चन्द्रलेखानिपादिना बर्बरकेण कनकदण्डिकान्तर्निहितामसिपुत्रिका-

१ प्रकाशिते b Be M B1 N (°सि°), see P 52, 4, ततश्च प्रथमप्रकाशिते ऽर्धरात्रे P, प्रकाशीकृते ऽर्धरात्रे K.—२ च ] om in N Be M B1, किल L ed III, वैरोधके after च in b K (om धके) L ed. I II, वैरोचनके l —३ हिम om in N Be M L l B1 ed III V —४ मुक्ताफल P, मुक्तामणि L l, ed. III मुक्तागण B1 —५ परिक्षेपेण l Be B1, K om. गुण परिक्षेप—६ उपरचित] विरचित b L, परिचित K, उपरचिते M, उपरिचित B1 —७ विचित्रपट्टमय° K l, चित्रपट्टमणिमय M, चित्रपटमय L N (?), पट्ट ed. I II —८ वारबाण ] बाणवार K, वारणबाण M, प्रावरण B1 —९ N K Be M l om मय, मकुट M —१० °नियद्धनिबिड नियमित° N, बन्धननिबिडनियमित° b, बद्धनिबिड° B1, निरुद्धनिबिड K, बद्धनिबिड° Be, निबन्धनियमित M, बद्धनिबिडनियमित l, पट्टबन्धनिबिडनियमित ed I, निबिडनियमित L ed. III V, P om. निबिड —११ रुचिर Be M B1 —१२ सुराभितर P —१३ °वैकक्ष° P, °वैकक्षक K, वैकक्ष्यमाला M, दामवैकक्ष्यक N, दामवैलक्ष्य L आदामवैकक्षिक Be (in marg पर्यंत कुसुमदाम), दामवैकक्षिक l B1 ed I II —१४ अभिभासित P —१५ विपुलवक्ष° N P Be M L B1 ed III —१६ परिचिततमैर् N b l Be B1 ed III, परिचितैरपि L, परिचितदर्शनैर् M ed I II —१७ °रूपाकृतौ P N (?), रूपाकृते B1 °शरीराकृतौ K—१८ अनुज्ञया N, आदेशात् b Be l L ed III, उपदेशात् B1 —१९ °सापवाह्य P, °वाह्य M —२० चन्द्रलेखाभिधाना ed I II.—२१ नागवशाम् K, नागवधूम् M, आरोप्य P —२२ पर्यंतराजलोकेन M —२३ अनुगम्यमाने जवेन ed I II —२४ भवन ] सदन B1 —२५ °धारदारुवर्मणा N, सूत्रधारेण om in K B1, सूत्रकारेण M, दारुवर्मणा सूत्रधारेण b —२६ चन्द्रोऽयम् M —२७ अभिमन्यमानेन M, मत्वा L —२८ वैरोधकस्य ] तस्य L, वैरोचकस्य Be —२९ निपातनाय ed I. II.—३० कनकयन्त्र[तो]रणम् K—३१ अत्रान्तरे हि निगृ° Be —३२ l om बहिर् —३३ वाहनेषु ] साधनेषु N —३४ P om स्थितेषु —३५ B1 om चन्द्रगुप्तानुयायिषु —३६ भूमिपालेषु ] om. in K, नृपेषु L ed III, B1 om पाले —३७ एव om. in P —३८ चन्द्रलेखानिपादिना M only, all other Mss चन्द्रगुप्तनिपादिना; l चन्द्रगुप्तवधाय निपादिना —३९ कनक N, कनकमयदण्डाभ्यन्त° P —४० दारुनिहितामसिपुत्रिकाम् Bo l.

माक्रष्टुकामेनावलम्बिता करेण कनकशृङ्खलामुखावलम्बिनी कनकदण्डिका ।

राक्ष । कष्टम् । उभयोरप्यस्थाने यत्नः । ततस्ततः ।

विरा । अथ जघनाभिघातमुत्प्रेक्षमाणा गजवधूरतिजवतया गत्यन्तरमारूढवती । ततः प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन प्रभ्रष्टलक्ष्यं पतता यन्त्रतोरणेनाकृष्टकृपाणीव्यग्रपाणिरनासादयन्नेव चन्द्रगुप्ताशयां वैरोधकं दारुवर्मणो हतस्तपस्वी वर्वरकः । ततो दारुवर्मणा यन्त्रतोरणनिपातमात्मविनाशफलमोकलय्य पूर्वमेवोत्तुङ्गतोरणस्थलमारूढेन यन्त्रघटनबीजं लोहकीलकमादाय हस्तिनीगत एव हतस्तपस्वी वैरोधकः ।

राक्ष । कष्टम् । अनर्थद्वयमापतितम् । न हतश्चन्द्रगुप्तो हतौ वैरोधकवर्वरकौ । सोद्वेगमात्मगतम् । न तौ हतौ सर्वथा । दैवेन वयमेव हताः । प्रकाशम् । अथ 1
सूत्रधारो दारुवर्मा कथम् ।

---

१ आकष्टु° N, आकष्टुं अवलम्बिता P, K om अव —२ P om कनकशृङ्खलामुखावलम्बिनी, Be M l L B₁ om मुख —३ कष्टम् om. in Nb K Be M B₁, B₁ ins स्वगतं before उभयो —४ ततस्ततः om in Nb Be M B₁ —५ विघातम् B₁ —६ °प्रेक्ष्य° P, अभिप्रेक्षमाणा M —७ गजवशा P —८ त्वरितजवतया N, अतिजवनतया b Be (अति°) l —९ ततः ] अथ P, om. in N, Be M B₁ —१० गति] गमन P गत N B₁.—११ कलितेन K, °मुक्तेन च N ed I —१२ भ्रष्टलक्ष्य P ed I II, °लक्ष्या b, °चन्द्रगुप्तलक्ष्य K —१३ पातयता यन्त्रतोरणम् P —१४ कृष्ट° N —१५ °कृपाण° N M, कृपाणीको ed I.II —१६ अनासाद्यैव l ed II.—१७ चन्द्रगुप्तप्रत्याशया K ed. I. II —१८ वैरोधक om in K M B₁ ed (III V read everywhere वैरोचकम्) वैरोधक Be, वैरोचनकम् l —१९ दारुवर्मणा om in Be —२० वर्वरकः M —२१ तोरण om in P निपातनाद् b L, पातम् K Bo B₁, विनिपातम् M —२२ आत्मविनाशहेतुम् K, आत्मनो वधम् b, आत्मवध L ed III.—२३ आकलय्य] अवधार्य Be l B₁ ed I.II —२४ पूर्वम्] शीघ्रम् l Be, ed II —२५ उत्तुङ्ग] तुङ्ग b L l, यन्त्र K, उत्तुङ्गतो B₁—तोरण ] गोपुर M, स्थलम् ] स्थानम् l° ed I II —२६ °घटन° Nb K M L —२७ बीजम् ] हेतु L —२८ °कीलम् N —२९ सगत P —३० तपस्वी om in P —३१ वैरोधक ] वर्वरक M, वैरोचक Bo L—३२ हा कष्ट Bo ed I II —३३ अनर्थं N, अनर्थत्रय M, द्वयमप्यनर्थम् B₁ —३४ चन्द्रगुप्तहतको K, °गुप्तोऽस्मै ed. I II —३५ °वैरोचक° Be (omitting the text from here to पुरःसरेण )—३६ L ed III ins. दैवेन after °वर्वरकौ —३७ सोद्वेगम् om in N b K B₁, आत्मगतम् om in N, N M L om the text from सोद्वेगम् up to प्रकाश —३८ नैतौ K.—३९ दैवेन ] विधिना B₁, K om —४० सूत्रधारो om in K, °धारदारुवर्मा N, सूत्रकारो M —४१ कथम् ] क्व ed I II

विरा । वैरोधकपुरःसरेण[1] पदातिलोकेन लोष्टघातं[2] हतः ।

राक्ष । सास्रम् । कष्टम्[3] । अहो वत्सलेन[4] सुहृदा वियुक्ताः स्मः[5] । अथ[6] तत्र तेन भिषजाभयदत्तेन किमनुष्ठितम्[7] ।

विरा । अमात्य[8] सर्वमनुष्ठितम् ।

राक्ष । सहर्षम्[9] । अपि सखे हतश्चन्द्रगुप्तः ।

विरा । दैवान्न[10] हतः ।

राक्ष । सविषादम्[11] । तत्किमिति[12] परितुष्टः[13] कथयसि सर्वमनुष्ठितमिति ।

विरा । अमात्य[14] कल्पितमनेन[15] योगचूर्ण[16]मिश्रमौषधं[17] चन्द्रगुप्ताय । तच्च प्रत्यक्षीकुर्वता चाणक्यहतकेन[18] कनकभाजने[19] वर्णान्तरमुपलभ्याभिहितश्चन्द्रगुप्तः[20] । वृषल वृषल[21] सविषमौषधम्[22] । न पातव्यमिति[23] ।

राक्ष । शठः[24] खल्वसौ वटुः । अथ स[25] वैद्यः[26] कथम् ।

विरा । स खलु वैद्यस्तदेवौषधं पायितश्चोपरतश्च[27] ।

राक्ष । सविषादम्[28] । अहो[29] महान्विज्ञानराशिरुपरतः[30][31] ।

---

१ पुरःसरै पदातिलोकै K.—२ एकलोष्टघातेन b M N ( अनेक° ), एकलोष्टघात K, लोष्टघात P, एकैकलोष्ट° L B₁, लोष्टघात ed I–V, एकलोष्टघातमिति Grab,—३ कष्ट om. in K, कष्ट भो कष्ट ed I II—४ अतिवत्सलेन P, सुहृदा दारुवर्मणा b, दा° सु° K.—५ विप्रयुक्ता l Be, वियुक्तोऽस्मि M.—६ अथ ] कथय M, तत्र om in N M B₁ ed. V, तेन तत्र b K ed I II, तत्रत्येन L ed III.—७ कृतम् P—८ अमात्य om in b P Be—९ सहर्षं om in Be B₁, अपि ] om in N, अपि नाम K ed I II, किं b L ed III, सखे om in P b M, दुरात्मा चन्द्रगुप्त b L ed III चन्द्रगुप्तहतक K Be B₁—१० अमात्य before देवात् K Be, सर्वमेतद्भवति before देवात् b—११ सविषादम् om in P B₁—१२ किमिदानीं b K l Be B₁—१३ परितुष्ट om in b K l L परितुष्टवत् M—१४ P M *om अमात्य*—१५ नेन P—१६ *विषयोगचूर्ण°* N (=Tel E) *विषभोग्यचूर्ण°* B₁ विषचूर्ण b K ed I II, सविषम् P, विषचूर्णमिश्र° l योगचूर्ण Be M ed III V—१७ b P om. मिश्रम्, मिश्रितम् Be ed III V—१८ चाणक्येन K.—१९ °भाजनस्य N, °भाजन K, कनकमयभाजने P, पानकभाजने Be—२० वर्णान्तरगमनम् N ( Tel E) वर्णान्तरगतम् b Be l वर्णान्तरागत K, वर्णांतर गत B₁, वर्णान्तरमुपगतम् ed I II—२१ वृषल once only M.—२२ इदमौषधम् Be l B₁—२३ न पातव्यम् २ K, अपातव्यम् Be, सविषमिदं न पातव्यमौषधमिति M—२४ शठ om in K—२५ स om in P K Be B₁—२६ N ins तत before स, अथ खल्वसौ वै° K, स खलु वैद्य om in M l B₁—२७ P om च, यदितरेषा । तदेवौषधं पायितश्चोपरतश्च b, उपरत ] मृत L ed III.—२८ सविषादम् om. in N K Be M B₁—२९ अहो] om in b Be B₁, हा K, अहह ed I II—३० महाकार्यराशिर् Be, महान्कार्यराशिर् l—३१ उपहत P

अथ तस्य[1] शयनाधिकृतस्य प्रमोदकस्य[2] किं वृत्तम्[3] ।

विरा । आर्य[4] यदितरेषाम्[5] ।

राक्ष । सोद्वेगम्[6] । कथमिव[7] ।

विरा । स खलु मूर्खस्तं युष्माभिरतिसृष्टं[8] प्रभूतमर्थराशिमवाप्य[9][10] महता व्ययेनोपभोक्तुमारब्धवान्[11] । ततः कुतस्तवायं[12] भूयान्[13] धनागम इति[14] पृच्छ्यमानो यदा बहुवाक्यभेदमाकुलमकथयत्[15] तदा चाणक्यहतकादेशाद्[16]विचित्रेण[17] वधेन व्यापादितः[18] ।

राक्ष । सोद्वेगम्[19] । कथम् । अत्रापि[20] वयमेवोपहता दैवेन[21] । अथ शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्तुमस्मत्प्रयुक्तानां नरपतिशयनगृहस्या[22]न्तःसुरुङ्गाम्[23] एत्य प्रथममेव[24] निवसतां[25] बीभत्सकादीनां[26] को वृत्तान्तः ।

विरा । अमात्य[27] दारुणो वृत्तान्तः[28] ।

---

१ तस्य om in b Bi, अथ तत्र तस्य P तस्य च N—२ प्रमोदकस्य शयनाधिकृतस्य P—३ का वार्त्ता K—४ आर्य] अमात्य K M, अथ P, om in B1—५ यदितरेषाम्] दारुणो वृत्तान्तः b, दारुवर्मणो वृत्तान्तः K, तस्यापि आत्मविनाशः P, आत्मविनाशः Bo—६ सोद्वेगम् om in N M B1, सावेगम् P—७ N om इव, K om. the whole line—८ अतिसृष्टं] उत्सृष्टं N, अनुसृष्टं L, तेन भवद्भिर्दत्तो महानर्थराशिर्° आरब्धः K—९ प्रभूतम्] अतिप्रभूतम् N, अतिमहान्तम् b Be l B1, महान् K, महान्तम् ed I. II, om. in M—१० अर्थराशिम्] अभिभूतम् M, K B1 om अवाप्य—११ आरब्धः N K Bo M—१२ कुतोऽयं b K, कुतोऽयमेवं N, कुतोऽयमेवं M, ऽयं om. in Be l B1—१३ भूयान्] महान् K—१४ धनागमस्त्वयेति N b (Tel. E) l B1—१५ वाक्यभेदान्बहूनवगमयत् N, वा° ब° अगमत् b Be B1 l L ed III. V; बहुवाक्यभेदमाकुलमकथयत् P, वाक्यभेदानुकूलमगमत् K, वाक्भेदान् बहूनवदत् M, वाक्यभेदान्बहूनकथयत् ed I II, वाक्यभेदे सति भृत्यविषये भर्तुः परमो वितर्कः स्यादिति तत्र वर्जनीयमिति वाक्यभेदाकुलमिति बोधयति Grah. ( IO ), वाक्यभेदाकुलमिति तेन सर्वत्र सर्वेषां विरुद्धवचनता निषिद्धा इति भावः Ratnathacakra —१६ हतक om. in M, उपदेशात् N—१७ द्विचित्रेण विधिना N, विचित्रवधेन L—१८ घातितः K—१९ सविषादम् P—२० अत्रापि om. in P, अद्यापि K—२१ दैवेन उप° वयम् b Ml, दैवेन वयम् उप° P Bi—२२ K B1 om. शयन; N om गृह; गृहे स्थितानामन्तस्सुरुंगामेत्य प्रथममेव° M—२३ सुरुंगामेत्य b, सुरङ्गामेत्य K B1, अन्तर्भित्ति सुरङ्गामेत्य ed III-V, एत्य om. in P, राजगृहस्यांतर्भित्ति सुरुंगामेत्य प्रथममेव संताम् L—२४ प्रथममेव om. in ed I-III. V—२५ वसताम् P K—२६ बीभत्सादीनां N P K—२७ अमात्य om. in M B1, दारुणो] को l—२८ वृत्तान्तः om. in K.

राक्ष । सावेगम्[1] । कथं[2] दारुणो वृत्तान्तः । न[3] खलु विदितास्ते[4] तत्र निवसन्तश्चाणक्यहतकेन[5] ।

विरा । अथ[6] किम् । प्राक् चन्द्रगुप्तप्रवेशात् प्रविष्टमात्रेणैव शयनगृहं[7] दुरात्मना चाणक्यहतकेनावलोकितम् । तत एकस्माद्[8]भित्तिच्छिद्राद्गृहीतभक्तावयवानां[9] पिपीलिकानां निष्क्रामन्तीनां[10] पङ्क्तिमवलोक्य पुरुषगर्भमेतद्गृहमिति गृहीतार्थेन[11] दाहितं[12] तदेव[13] शयनगृहम् । तस्मिन्[14]दह्यमाने धूमनिवह[15]निरुद्धदृष्टिविषयाः प्रथमम्[16]अपिहितमनवगम्य[17] निर्गमनपथं[18] बीभत्सादयस्[19]तत्रैव ज्वलितज्वलनमुपगताः[20] ।

राक्ष । सास्रम्[21] । सखे पश्य[22] दैवसंपदं दुरात्मनश्[23]चन्द्रगुप्तस्य । कुतः[24] ।

---

१ सावेगम् *om.* in K M—२ कथम् ] अथ K । कथं° वृ° *om.* in Bo l—३ न *om.* in N—४ विदिता निवसन्तस्तत्र चाणक्येन K—५ चाणक्यहतकेन om. in l—६ अमात्य । अथ किम् M Bi—७ शयनगृहे दुरा° चा° अवलोकिते ed II; शयनगृहे दुरात्मनावलोकिते चाणक्यहतकेन Be, समन्तात् दुरात्मनावलोकितं चाण° b, निपुणमवलोकयता L ed III—८ ततोऽन्यस्माद् N b K M Bi, ततस्तस्माद् Be l, कस्माच्चिद् L—९ °भक्ष्यावयवानां K M, °भक्तावयवां Bi, निष्क्रामन्तीनां पिपी° पङ्क्तिम् N Bi (°तीं°); नि° प° पिपी° b, पिपी° प° निष्क्रामन्तीं K; भक्तावयवां निष्क्रामंतीं पिपीलिकाम् l Be; °भक्तावयवां निष्क्रामन्तीं पिपीलिकापङ्क्तिम् ed. III. V— १० निष्क्रामतीनां M निःक्रामतीनां Bi । अवलोक्य ] आलोक्य M—११ गृहीतार्थेन om. in P—१२ आदाहितम् M—१३ तदन्तःशयनगृहम् Be l ed. II—१४ तस्मिंश्च b K Be Ml—१५ b P Bi *om.* निवह; निरुद्ध ] अभिरुद्ध b Be l, अवरुद्ध P K L, दृष्टयः L ed. III—१६ from प्रथमम् up to निर्गमनपथं om. in P । प्रथममपिहितम् b प्रथमविहितम् M—१७ अनवगम्य ] अनधिगम्य b K M Bi, अनुपगम्य l—१८ निर्गमनपथं ] N (Tel. E); द्वारं b K Be l Bi, निर्गमनद्वारम् M, प्रथममभिहितनिर्गमनमार्गमनधिगम्य द्वारं L—१९ दैवसम्पदा दुरात्मनश्चन्द्रगुप्तस्याज्ञया बीभत्सादयः K; दैवसंपाद्दुरात्मनश्चन्द्रगुप्तस्य बी° M, तदैवसंतापाद्दुरात्मनंन्सर्वं एवोपरताः Be, तदैव बीभत्सकादयो Bi —२० °ज्वलनमुखम् b, °ज्वलमुखम् K; ज्वलन्तं ज्वलनम् M, P (Tel. E) have only ज्वलिताः. Considering the verbosity of the speaker, I prefer the reading of N and other Mss, ज्वलितं ज्वलनमुपगताः सर्वे एवोपरताश्च Bi; K also adds सर्वं एवोपरताश्च; Be has only सर्वं एवोपरताः; तदैव संतापात् सर्वं एवोपरताः l; ज्वलनमुपगम्य तत्रैव नष्टाः L ed. III. V; ज्वलनमुपगता उपरताश्च ed. I. II.—२१ सास्रं ] सचिन्तं कष्टं K; om. in M—२२ पश्य विराधगुप्त b—२३ दुरात्मनः om in M; चन्द्रगुप्तहतकस्य N M Bi, चन्द्रगुप्तस्य……सर्वं एवोपरताः । राक्ष । कष्टं° b, दैवसंपदं सर्वं एवोपरताः l, Be om. सखे °गुप्तस्य—२४ कुतः । संचिन्त्य । कष्टं भोः कष्टं P, कष्टं भोः कष्टं l, कष्टं भोः कष्टं कुतः b.

कन्या तस्य वधाय या विषमयी गूढं प्रयुक्ता मया
दैवात् पर्वतकस्तया विनिहतो यस्तस्य राज्यार्धभाक् ।
ये शस्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिताः
मौर्यस्यैव फलन्ति हन्त विविधं श्रेयः सुनीतानि मे ॥ १७ ॥ ४५॥

विरा । अमात्य तथापि प्रारब्धमपरित्याज्यमेवं । पश्यत्वमात्यः ।

आरभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ॥ १८ ॥ ४६ ॥

अपि च ।

किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन् कृपणवत् श्लाघ्यो जनो लज्जते
निर्व्यूढिः प्रतिपन्नवस्तुषु सतामेकं हि गोत्रव्रतम् ॥ १९ ॥ ४७॥

राक्ष । सखे प्रारब्धमपरित्याज्यमिति प्रत्यक्षमेवैतन्नवतः ।

ततस्ततः[1] ।

विरा । ततः[2]प्रभृति चन्द्रगुप्तशरीरे सहस्रगुणम[3]प्रमत्तश्चाणक्यहतक एभ्य[4] एतादृशं भवतीत्यन्विष्यान्विष्य[5] निगृहीतवान्[6] कुसुमपुरनिवासिनो[7] युष्मदीयानाप्त[8]पुरुषान् ।

राक्ष । सावेगम्[9] । वयस्य[10] के के[11] निगृहीताः ।

विरा । आदावेव[12] क्षपणको जीवसिद्धिः सनिकारं[13] नगरान्निर्वासितः[14] ।

राक्ष । आत्मगतम्[15] । एतत्तावत् सह्यम्[16] । न[17] निष्परिग्रहं[18] स्थानभ्रंशः[19] पीडयिष्यति[20] । प्रकाशम्[21] । सखे[22] कमपराधमुद्दिश्य निर्वासितः[23] ।

विरा । एष[24] राक्षसप्रयुक्तो[25] विषकन्यया पर्वतेश्वरं घातितवानिति[26] ।

राक्ष । आत्मगतम् । साधु[27] कौटिल्य साधु ।

परिहृतमयशः[28] पातितमस्मासु च[29] घातितोऽर्धराज्यहरः[30] ।
एकमपि नीतिबीजं बहुफलतामेति यस्य तव ॥ २० ॥ ४८ ॥

प्रकाशम् । ततस्ततः ।

---

१ ततस्ततः om. in M—२ ततश्च P—३ सहस्रसहस्रगुणम् N, शतगुणमप्रमत्तश्चन्द्रगुप्तशरीरे K; हतक om. in N M—४ एभ्य एव N K; एतादिशं भवतीति N; एतदीदृशं भविष्यतीति b M L Bi, एतदीदृशं प्रभवतीति K; एतदीभ्य (देभ्यः) ईदृश भविष्यतीति Be—५ अन्विष्य once only K Be M—६ गृहीतवान् K—७ वासिनो P M—८ आप्त om. in K—९ Bi om. सावेगम्—१० वयस्य ] अथ N K Be M Bi—११ के के] कथय २ के के b, केन M; कथय के के L—१२ अमात्य before आदौ Bi; प्रथमं तावत् क्षपणको K ed. III—१३ सनिकारं om. in M—१४ निःसारितः K—१५ आत्मगतम् om. in P; तावत् om. in P—१६ सह्यम् ] युक्तं b, शक्यं K Be M L l Bi—१७ न तु M—१८ निःपरिग्रहं N °परिग्रहे b—१९ परभ्रंसः N; परिभ्रंशः ed. I. II—२० पीडयति K M—२१ प्रकाशं om. in P—२२ अय सखे P, सखे ] वयस्य b ed. III; सखे विराधगुप्त M; अथ कम् N b K; कमपि P—२३ नगरान्निर्वासितो जीवसिद्धिः M—२४ एष खलु दुरात्मा b—२५ °प्रयुक्तया N b P—२६ व्यापादितवान् N K M—२७ कुतः Be ins. after साधु—२८ अयशः स्वीयं K Bi—२९ च om. in K M Bi; च घातितो ] हतस्तथा N—३० राज्यार्धहरः P Be.

विरा । चन्द्रगुप्तशरीरमभिद्रोग्धुमनेन व्यापारिता दारुवर्मादय इति नगरे प्रख्याप्य शकटदासः शूलमारोपितः ।

राक्ष । सास्रम् । हा सखे शकटदास अयुक्तस्तवायमीदृशो मृत्युः । अथवा स्वाम्यर्थमुपरतो न शोच्यस्त्वमसि । वयमेवात्र ननु शोच्या ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः ।

विरा । अमात्य मा मैवम् । स्वाम्यर्थ एव साधयितव्य इति ।

राक्ष । सखे ।

*अस्माभिरमुमेवार्थमवलम्ब्य जिजीविषा ।*
परलोकगतो देवः कृतघ्नैर्नानुगम्यते ॥ २१ ॥ ४९ ॥

विरा । अमात्य नैतदेवम् ।

युष्माभिरमुमेवार्थमालम्ब्य न जिजीविषा ।
परलोकगतो देवः कृतघ्नैर्नानुगम्यते ॥ २२ ॥ ५० ॥

सखे कथ्यताम् । अपरस्यापि सुहृद्व्यसनस्य श्रवणे सज्जोऽस्मि ।

---

१ ततश्चन्द्रगुप्त॰ N b—२ शरीर M B1 om—३ अभिद्रोग्धुम् P—४ अनेन P B1 om—५ आरोपित कायस्थ शकटदास P—६ सास्र ] सबाष्प N K, सकरुण P om in M B1—७ हा om in K—८ सखे] वयस्य N M—९ अयुक्तरूप Nb M B1 ed III—१० अथवा N om—११ स्वाम्यर्थे Pl—१२ उपरतोऽसि P—१३ शोच्य ] वाच्य K—१४ असि om in P M—१५ अत्र om in N Be l B1—१६ ननु om in Nb K Bo M l B1—१७ अनुशोच्या B1 l Bc.—१८ P K येन—१९ इच्छामि (!) N—२० अमात्य om in P—२१ मा मैव] नैतदेव Be l B1, om in N M—स्वाम्यर्थे P—२२ इति om in P B1—साधयितव्यो युष्माभिरिति मयतसे b L (Lom. युष्माभि ), साधयितव्य । न यूय शोच्या B1—२३ सखे ] सखेद K नैतदेव M P om.—२४ अस्माभि ] अस्माक P—२५ अवलम्ब्य b P, all other Mss. आलम्ब्य—२६ all Mss. excepting b P ins न, जिजीविषा N b P—२७ कृतघ्नै l—२८ from विरा॰ to गम्यते om in N P K L l B1—विराधगुप्त । अमात्य नैतदेव युष्माभिरमुमेवार्थमालम्ब्य ना जिजीविषा b, अमात्य नैव Bc अमात्य एवमेव । अमात्य नैतदेव । युष्माभिरमुमेवार्थ॰ कृतघ्नैर्नानुगम्यते M ed V (cf Telang N E.) अमात्य नैतदेव । अस्माकममुमेवार्थमित्यादि पुन पठति ed I II, I propose to write in the first verse अवलम्ब्य 'it is because we base our love of life on that purpose that we etc. —२९ व्यसनशतस्य ed I II, N om अपि, अपर मित्र[पि]सुहृद्व्यसने K—३० सज्जीभूतोऽस्मि P, सज्जा वयम् Bc l B1 ed. I II

विरा । तत एतदुपलभ्य चन्दनदासेनापवाहितं सौहार्देनामात्यकलत्रम् ।

राक्ष । सखे क्रूरस्य चाणक्यवटोर्विरुद्धमयुक्तमनुष्ठितं चन्दनदासेन ।

विरा । अमात्य न युक्ततरः सुहृद्द्रोहः ।

राक्ष । ततस्ततः ।

विरा । ततो याच्यमानेनानेनापि यदा न समर्पितममात्यकलत्रं ततः कुपितेन चाणक्यवटुना—

राक्ष । सावेगम् । न खलु व्यापादितः ।

विरा । अमात्य न खलु व्यापादितः किं तु गृहीतगृहसारः सपुत्रकलत्रो बन्धने निक्षिप्तः ।

राक्ष । तत्किं परितुष्टः कथयसि । अपवाहितमनेन राक्षसकलत्रमिति । ननु वक्तव्यं संयतोऽनेन सपुत्रकलत्रो राक्षस इति ।

प्रविश्य पुरु । जअदु जअदु अज्जो । अज्ज एसो क्खु सअडदासो पडिहारभूमीए उवत्थिदो ।

---

१ तदेतद् K—२ आरूढसौहार्देन b, उपलब्धसौहार्देन P सौहार्दम् h गूढसौहार्देन Bo in marg उपरूढसौहार्देन ed. I उपरूढसाध्वसेन ed. II om in ed III दृढसौहार्देन ed V—अपवाहितम् after सौहार्देन b P ed I II V—३ अमात्यस्य P Bo—४ सखे om in N b K, सदा क्रूरस्य M—५ चाणक्यस्य P h—°वटोर्मार्पितमिति विरुद्ध° Bo l—६ अयुक्तम् om in P ed. I II the word is supposed by the rejoinder युक्ततर —७ अमात्य om in M B1—८] न च N, तत्र b, ननु h M, नन्वयुक्त Be नन्वयुक्ततर L l B1 ed I-V—९ यदा याच्यमानेनानेन b, बहु याच्यमानेनापि न समर्पितमनेनामात्यराक्षसस्य कलत्रमिति कुपितेन P, न यदा K, यदा याच्यमानेनापि M B1 om अनेन and यदा—९ तत ] om in M, तदा b h M—१० सोद्वेगम् b—सखे न खलु N—११ अमात्य om in P M—१२ खलु om. in K l B1, B1 has दैवात् before व्यापादित—१३ व्यापादित om in P—१४ गृह om. in P—१५ सह पुत्रकलत्रै K—१६ बन्धनागारे Be M L l B1, सपत्य बन्धनागारे b K ed I II, निक्षिप्त ] नियुक्त P—१७ तत्कि ] सखे तत्कि Be सखे तत्कथम् N, किमिति P, किं K om, तत किं B1—१८ अतिपरितुष्टवत् M—१९ M B1 ins. विरा° after कथयसि and राक्ष° after इति, अनेन Be om—२० अमात्यकलत्रम् M—२१ संयतो ] गृहीतस्तेन P, संयमितो b ed III, M has संयतो °नेन after सपुत्रकलत्र—२२ अनेन om in Be B1—२३ प्रविश्य पटाक्षेपेण Be l ed II, अत्रान्तरे प्रविश्य पुरुष B1—२४ जेदु M—२५ अज्जो ] अमच्चो N b M—२६ अज्ज ] अमच्च N M, om in P—२७ खु N b om in Bo M—२८ पलिहार° P K b, °भूमीए P K, °भूमिम् N b भूमि B1 भूमी M—२९ उपट्ठिओ M, उवट्ठिओ B1 l ed III (दो), उअत्थिदो K उवत्थिदो L

राक्ष । सहर्षम् । अपि सत्यम् ।

पुरु । किं अलिअं अमचपादोवजीविणो मन्तिदुं जाणन्ति ।

राक्ष । सखे विराधगुप्त कथमेतत् ।

विरा । अमात्य स्यादेवम् । रक्षति खलु भव्यं भवितव्यता ।

राक्ष । प्रियंवदक यद्येवं तत्किं चिरयसि । क्षिप्रं प्रवेशय समाश्वासय माम् ।

पुरु । जं अमच्चो आणवेदि । इति निष्क्रान्तः ।

ततः प्रविशति सिद्धार्थकेनानुगम्यमानः शकटदासः ।

शाक । आत्मगतम् ।

दृष्ट्वा मौर्यमिव प्रतिष्ठितपदं शूलं धरित्र्यास्तले
तल्लक्ष्मीमिव चेतसः प्रमथिनीमुद्वा च वध्यस्रजम् ।
श्रुत्वा स्वाम्युपरोधरौद्रविषमानाघाततूर्यस्वनान्
न ध्वस्तं प्रथमाभिघातकठिनं मन्ये मदीयं मनः ॥ २३ ॥ ५१ ॥

---

१ सहर्षम् P only, N b ins भद्र, ed. I II. प्रियम्वदिक before अपि—२ अलिअं किं Bı, किं om. in N K Be M, अलिअंपि M, अलीअं या b—३ अमच्च°] ॆच्च °P—°पादोपजीविणो N b P Be, °पाओपजीविणो M, अमच्चपादोपजीवी जणो Bi ४ मन्तिदुं ] मन्तंदु N b M, मन्तेदुं पि ण जाणन्ति N (omitting किं); अम °जण (!) अलिअं मंतिदुं जाणंति Be, अ° जणा ण अलिअं जा° l, किं अलीअं अमच्चपादेसु विण्णवेदेमि L₄ जाणादि Bi—५ किमेतत् K Bı—६ अमात्य om. in M; Bı om. स्यादेवं; एवं ] एतत् N, अप्येवं K, एतदेवं Be M l, Be om. खलु; M. om. भव्यं; यतो भव्यं रक्षति भवि° b यतो र° भ° भ° l—७ यदि ] यत् N—८ तत् ] om. in P, तर्हि Be-किमद्यापि b ed. III—९ चिरायसि M, विचारयसि Be l—१० प्रवेशय । मामाश्वासय Be l, प्रवेश्य मामाश्वासय Bi; प्रवेश्यतां मामाश्वासयितुम् K, P has only प्रवेश्यतामयम्—११ अमच्चो ] अज्जो P K—१२ धरित्र्याः] पृथिव्याः N M, धरित्री Bi—१३ तले ] तटे P, तरे K—१४ चेतसः° M l Be Bi; प्रमथनीं P—१५ उद्वा च ] M only; मूर्ध्नावध्यस्रजं N, °वध्य स्रजं b, मूर्धावबद्धां स्रजं P; मूर्धावबद्धां स्रजं K, मूर्ध्ना च वध्यस्रजं Bi, उन्मुच्य कण्ठस्रजं Be (orig; in marg. मूर्धावबध्य स्रजं) l, उन्मुच्य वध्यस्रजं ed II, आवध्यस्रजं च दृष्ट्वा Vat. मूर्ध्ना स्रजं चद्वा Grah.—१६ उपरोध° ] पुरोपरोधविषमान् b उपरोध° K अपरोध L ed. III—१७ प्रथमाभिघात ] पूर्वाभिनिपात b—१८ मन्ये मदीयं मनः ] यत्तन्मदीयं मनः L₄

नाट्येनावलोक्य सहर्षम् । अयममात्यराक्षसस्तिष्ठति य एषः

अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन् ।

पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः ॥ २४ ॥ ५२ ॥

उपसृत्य । जयत्वमात्यः ।

राक्ष । नाट्येनावलोक्य सहर्षम् । सखे शकटदास दिष्ट्या दृष्टोऽसि । तत्परिष्वजस्व माम् । परिष्वज्य । इदमासनम् । आस्यताम् ।

शक । यदाज्ञापयत्यमात्यः । इति नाट्येनोपविष्टः ।

राक्ष । सखे शकटदास कोऽस्य मम हृदयानन्दस्य हेतुः ।

शाक । सिद्धार्थकं निर्दिश्य । अनेन प्रियसुहृदा सिद्धार्थकेन घातकान् विद्राव्य वध्यस्थानादपहृतोऽस्मि ।

राक्ष । सहर्षम् । भद्र सिद्धार्थक काममपर्याप्तमिदमस्य प्रियस्य । तथापि गृह्यताम् । इति स्वगात्रादवतार्य भूषणानि प्रयच्छति ।

सिद्धा । गृहीत्वा पादयोर्निपत्य स्वगतम् । अअं खु अज्जोवदेसो । भोदु ।

---

१ नाट्येन M om. । अवलोक्य ] विलोक्य M—२ अये अयम् b K, अले अयम् Be—३ अम्लानभक्तिः P—४ क्षीणेऽपि स्वाम्यर्थं धुरमुद्वहन् Be Bi (Telang E [क्षीणे] Dhruva's S)—५ जयत्वमात्यः b om.; जयति P, जयति जयति K—६ नाट्येन M om ; अवलोक्य ] विलोक्य M—७ कौटिल्यगतोऽपि दृष्टो P L (त्वं दृष्टो), कौटिल्यगोचरगतोपि ed. I—V ८ तत् M om.—९ शक° । परिष्वज्योपविशति K, शक° । तथा करोति । राक्ष° । परिष्वज्य Bi; परिष्वजस्व माम् । शक° । तथा करोति । राक्ष° । चिरं परिष्वज्य । इदमासनमास्यताम् । शाक° । नाट्येनोपविष्टः ed. III.—१० सखे om. in Be M—११ मम om. in Be I (कोऽयमस्य हृ°); अथ कोऽयमस्मद्धृदयस्यानन्दहेतुः N, अथ कोऽयं मे हृदया° b, कोऽयमद्य हृदयस्य K; अथ कोऽस्य मे हृदया° M, अथ कोऽयं मे ईदृशस्य हृदयानन्दस्य हेतुः I, कोऽयं मे हृ° Bi—१२ सिद्धार्थकं निर्दिश्य om. in N K Be M—१३ अनेनैव b—१४ अभिद्राव्य b (see h) विद्रास्यं [स्य] N—१५ सखे सिद्धार्थक K—१६ किं पर्याप्तम् b L, अपार्याप्त [म] स्य प्रियस्येदं कार्यमिति K, अस्य om. in P, प्रियस्य ] प्रयत्नस्य M—१७ अवतार्य ] अपकार्य M, उत्तार्य Bi, प्रयच्छति ] नियच्छति P, अर्पयति K; समर्पयति Bi, न[द]दाति M—१८ From अअं as far as प्रकाशं om. in N M Be (Tel. G. Dhruva's S) I, अअं खु ] इदं खलु तं P, इमं खु K—१९ अज्जोवदेसं P K Bi

तधा करिस्सं । प्रकाशम् । अमच्च एत्थ मे पढमं पविट्ठस्स णत्थि को वि परिचिदो जहिं एदं अमच्चस्स पसादं णिक्खिविअ णिव्वुदो भविस्सं । ता इच्छामि अहं इमाए मुद्दिआए मुद्दिअं अमच्चस्स ज्जेव भण्डाआरे णिक्खिविदुं । जदा मे एदिणा पओअणं भविस्सदि तदा गेण्हिस्सं ।

राक्ष । भद्र को दोषः । शकटदास एवं क्रियताम् ।

शक । यदाज्ञापयत्यमात्यः । इति जनान्तिकं मुद्रां विलोक्य । अमात्यनामाङ्कितेयं मुद्रा ।

राक्ष । विलोक्यात्मगतम् । सत्यम् । असदुत्कण्ठाविनोदार्थं नगरान्निष्क्रामतो मम हस्ताद् ब्राह्मण्या गृहीता । तत्कथमस्य हस्तमुपगता । प्रकाशम् । भद्र सिद्धार्थक कुतस्त्वयेयमधिगता ।

---

१ तथावि P; तधा K—२ कारिस्सं K; इमं खु अमच्चोवदेसं सव्वधा करिस्सं Bi; एवं सचिवार्योपदेशं चाणक्यशासनं करिष्ये Grab.—३ मे पढमं Bi; मे पुढमं M; मे पढम° l; पढमं पइ° मे P; इमस्सिं से पढुम° णत्थि°मे K—४ को वि om. in M, परिचिदो वि P; परिचिदो जणो N K; परिचओ M—५ जहिं] एत्थ M; जत्था Be; येत्थ L; जत्थ l Bi—६ °अं N; अमच्चपसादं P M; अमच्चपसाअं K, अमच्चप्पसादं Bi, एणं अमच्चाप्पसादं Be; एणं अमच्चपसाअं l—७ भोमि N—८ इच्छेमि L—९ अहं om. in P Be M l—१० इमाए] एदाए Be M l—११ मुद्दिआए] Be om.; मुद्दाए K M Bi—१२ मुद्दिअ N P K M, मुद्दिदं b L ed. I-III, मुद्दिअं Be l Bi [ P in marg. छाप इति ख्यातं कृत्वा ]—१३ अमच्चरक्खसस्स P, एव्व M; जेव्व Bi—१४ णिक्खिविदुं M, विणिक्खिविदुं Be; ठाविदुं L ed. III-V—१५ मे om. in P b; एदिणा मे Bi—१६ इमिणा P K M—१७ भविस्सिदि M, हविस्सदि Be; हुविस्सदि K, om. in Bi—१८ ता K—१९ गेह्णिस्सं Mss. except. N Be K, गिण्हिस्सं L; गेह्णिस्सं Bi—२० दोषः] भारः ed. II. V.—२१ Be om. शकटदास—२२ यथा P K; इति om. in N P K M; अमात्य इति मुद्रयति b Bi—२३ जनान्तिकं] om. in N Be M l Bi, आत्मगतं K; मुद्रां विलोक्य अये जनान्तिकं अये अमात्यनामाङ्कितं b—२४ M ins. अमात्य before अमात्य°; नामाङ्केयं N M—२५ सविषादं सवितर्कम् before आत्मगतं b Bi—२६ सत्यम्] कष्टं ed. I-II Bi—२७ असद् om. in P K M—विनोदनार्थं M—२८ ब्राह्मण्या] गृहिण्या M; P inverts the order of the sentences and has राक्ष° । मुद्रामवलोक्य स्वगतम् । सत्यमुत्कण्ठ° after the words तदितो° यदाज्ञापयति—२९ तत् om. in Be—३० अधिगता] उपगता K—अधिगता मुद्रा मुद्राधिगमं विस्तरेण श्रोतुमिच्छामि P.

सिद्धा । [१]अमच अत्थि [२]कुसुमउरे मणिआरसेट्ठी चन्दणदासो णाम[३] । तस्स [४]गेहदुवारे पडिदो[५] मए [६]लद्धा ।

राक्ष । युज्यते ।

सिद्धा । अमच किं [७]एत्थ जुज्जदि ।

राक्ष । [८]भद्र यन्महाधनानां [९]गृहद्वारि [१०]पतितस्यैवंविधस्योपलब्धिरिति ।

शक । [११]सखे सिद्धार्थक अमात्यनाम[१२]ाङ्कितेयं मुद्रा । [१३]तदितो बहुतरेणार्थेन [१४]भवन्तममात्यस्तोपयिष्यति । [१५]तद्दीयतामेषा [१६]मुद्रा ।

सिद्धा । [१७]अज्जं [१८]णं एसो जेव्व मे परिओसो[१९] जं[२०] इमाए [२१]मुद्दाए [२२]अमच्चो [२३]परिग्गहं करेदि[२४] । इति मुद्रां समर्पयति ।

राक्ष । [२५]शकटदास अनयैव मुद्रया [२६]स्वाधिकारे [२७]व्यवहर्तव्यं [२८]भवता ।

शक । [२९]यदाज्ञापयत्यमात्यः ।

सिद्धा । [३०]अमच विण्णवेमि किंपि[३१] ।

---

१ सुणादु भज्जो अस्थि P, एत्थ अत्थि M—२ कुसुमपुरे N l, कुसुमपुरणिवासी K, कुसुमउरणिवासी B1, णोरन्तरणिआसी N—३ णाम Be—४ गेहदुवारे N, °दुवारे b Be, गेहे दुआरे P, गेहदुआरे B1, गिहदुवारे M, गेहदुआरसद्दो(?) K, गेहदुवारपडिसरे L—भूमीए after दुवारे Be, दुवारभूमीए l—५ पडिआ N Be, परिदा K, वडिआ M l, पडिता L—६ लद्धा ] उवलद्धा l, पाविदा N, आसादिदा b L, आसादिआ K, समासादिआ M, समासादिदा ed. II (alternative) B1—७ एत्थ om in N Be M, जुज्जइ M B1—८ भद्र यत् om in N, भद्र P om, यत् Be M l om, यतो B1—९ गृहद्वारि ] द्वारि K B1 ed I II, गृहद्वारे l, गृहे ed III, गृहपतितस्यैव Be—१० एवंविधस्य वस्तुन b—११ from सखे to °लेय om in P, सखे om in M—१२ अमात्यराक्षसनाम° K, नामाङ्केयं N M—१३ तदितो ] यदि Be l, बहुतरेणापि B1—१४ भवन्तम् om in P—१५ तद् om in P Be M, तर्हि l—१६ मुद्रा om in P M—१७ अज्जा P, ण om in B1—१८ जेव्व om in Be, एव्व M, जेव्व B1—१९ परितोसो P, पसादो N M L, परिओसो K B1—२० ज अमच्चो B1—२१ मुद्दिआए P—२२ अमच्चो वि Be—२३ परिग्गाहपसाअ K, परिग्गहप्पसादं B1 ed I-II—२४ करेदि b K, करेइ P—२५ सखे शकटदास N b B1—२६ स्वाधिकारे] व्यवहारे b—२७ व्यवहर्तव्यम् ] वर्तितव्यम् N M, भवितव्यम् b—२८ भवता] त्वया Be, om in B1—२९ यद् ] यथा P K—३० अमच्च om. in P M—३१ किंपि om in b K B1 Grab, विज्ञाप्यं किं वि अत्थि Be, अमच्च णं विण्णवेमि b, अत्थि मे विण्णप्प° (?) M.

राक्ष । ब्रूहि विश्रब्धम् ।

सिद्धा । जाणादि ज्जेव अमच्चो जधा चाणक्कहदअस्स विप्पिअं कदुअ णत्थि मे पाडलिउत्ते पवेसो त्ति । ता इच्छामि अहं अमच्चस्स ज्जेव सुप्पसण्णस्स चलणेसुं सेविदुं ।

राक्ष । भद्र प्रियं नः । किं तु त्वदभिप्रायापरिज्ञानेन चोरितोऽस्माकमनुनयः । तदेवं क्रियताम् ।

सिद्धा । सहर्षम् । अणुग्गिहिदो म्हि ।

राक्ष । सखे शकटदास विश्रामय सिद्धार्थकम् ।

शक । यदाज्ञापयत्यमात्यः । इति सिद्धार्थकेन सह निष्क्रान्तः ।

राक्ष । सखे विराधगुप्त वर्णयेदानीं कुसुमपुरवृत्तान्तशेषम् । अपि क्षमन्तेऽस्मदुपजापं चन्द्रगुप्तप्रकृतयः ।

विरा । अमात्य बाढं क्षमन्ते । ननु यथाप्रधानमेवानुगच्छन्त्येव ।

---

१ भद्र ब्रूहि N M—२ जाणादि जेव Be l Bi, जाणइ एव्व M; णं जाणदि जेव्व K—३ जहा N l, जह M, यथा Be—४ °हदअस्स ] हतक° P, °वडुअस्स N b Bo M l; चाणक्यवडुअस्स Bi—५ अप्पिअं P—६ केदुअ Be—७ मे om. in N K Bc M l Bi; मे णत्थि P, ण. त्थि. मे. जण b—८ N Bc M l Bi ins. पुणो before पाड°; पाडलिपुत्ते M; पाडलिपुरे Bi—९ इच्छेमि L—१० K Bi om अहं—११ अमच्चस्स Bi—१२ एव्व M L; जेव्व l Bi—१३ सुप्पसण्णस्सेव P—१४ °सु N, चरणेसुं सेविदुं P, पाअपदेसं सेविदुं K, सुप्पसण्णे चलणे सेविदुं Bi; सुप्पसण्णे पादे सेविदुं ed. I. II, अमात्यस्यैव सुप्रसन्नात् चरणान् सेवितुं Grah.—चरणे सुस्सूसिदुं b, अमच्चचलणे (णे!) एव्व सुस्सूसिदुं L, चलणे सुस्सूसिदुं l Be, चरणे सुसूसु (?) ं M, °चलणे एव्व सुस्सू° ed. III, °चरणे च्चेव सुस्सू° ed. V.—१५ भद्र om. in P M, प्रियं नः प्रियं नः P, M Bi om. किं तु—१६ °ज्ञानाद् l, °ज्ञान° Bi, परिज्ञानेन N M—१७ चोरितो] चोदितो N; तिरोहितो ऽयमासीदर्थः K; अन्तरितो Bi M L (both adding ऽयम्); अन्तर्हितो Bo l—१८ सहर्षं om. in M Bi—१९ अणुगिहिदो N K (m) Bi, °गिहीदो b L, °गेण्हिदो P, °गिण्हिदुम्हि Bc, °ग्गहिद M; ह्नि N K b Bi—२० सखे b P Be M om—२१ गच्छ विश्रामय N M, विश्रामय P—२२ यद् ] यथा P—२३ इदानीम् om. in N Bo M l—कुसुमपुर om. in b K Bo M l ed. III—वृत्तशेषं ed III; वृत्तान्तमशेषं N, शेषवृत्तं L—२४ कुसुमपुरनिवासिनः P ins; N after °जापं.—२५ अपजापं M—२६ चन्द्रगुप्तप्रकृतयः ] प्रकृतिरपा अमात्यादयः Telang's F—२७ अमात्य om. in K—२८ ननु] नन्न च P—२९ यथाप्रधानम् ] यथाप्रकारं M L Bi ed. III, प्रकारं Bc; ननु प्रकानामपगम्यते ed. V (accord. to Mr. S G.)—अनुगच्छन्ति] आगच्छन्त्येव N P K L; इहागच्छन्त्येव M; अवगच्छन्त्येव Bi, अनुगम्यत एव Bc l.

राक्ष । सखे[१] किं तत्र[२] कारणम्[३] ।

विरा । अमात्य एतत्कारणम्[४] । मलयकेतोरपक्रमणात्प्रभृति[५] पीडितः[६] श्चन्द्रगुप्तेन चाणक्य इति चाणक्योऽप्यतिजितकाशितया[७] तैस्तैराज्ञाभङ्गैश्चन्द्रगुप्तस्य[८] चित्त[९]पीडामुपचिनोति । अयमपि मम[१०]ानुभवः ।

राक्ष । सहर्षम्[११] । सखे विराधगुप्त त्वमनेनैवा[१२]हितुण्डिकच्छद्मना[१३] पुनः कुसुमपुरमेव गच्छ[१४] । तत्र[१५] हि[१६] मे प्रिय[१७]सुहृद्वैतालिकव्यञ्जनः स्तनकलशो[१८] नाम प्रतिवसति[१९] । स त्वयास्मद्वचनाद्[२०]वाच्यः । चाणक्येन[२१] क्रियमाणेष्वाज्ञाभङ्गेषु[२२] चन्द्रगुप्तस्त्वया समुत्तेजनसमर्थैः[२३] श्लोकैरुपश्लोकयितव्यः कार्यं चातिनिभृतं[२४] करभकहस्तेन[२५] संदेष्टव्यमिति ।

विरा । यदाज्ञापयत्यमात्यः । इति निष्क्रान्तः ।

प्रविश्य पुरुषः । जअदु[२६] जअदु अमच्चो । अमच्च[२७] सअडदासो विण्णवेदि ।

---

१ सखे ] अथ P—२ तत्र P om.—३ कारणम् ] प्रकाशं N Be M L l Bi ed. III; प्रमाणं b—४ एतत्कारणम् ] इदं तत्र प्रकाशं N Be M L l Bi; इदं तत्र प्रमाणं b; इदं कारणं K—५ प्रभृति om. in K—६ पीडितः ] कुपितश्चन्द्रगुप्तश्चाणक्यस्य b Be M l (Telang's E). ed. III. V; कुपितश्चन्द्रगुप्तश्चाणक्यस्योपरीति L; कु° च° चाणक्येनेति Bi;—from चाणक्यो पि to अनुभवः om. in N—७ अतिजितकाशितया ] Be in marg. जितप्रतिज्ञः; l om. अति; असहमानः after °काशितया b K; असहमानश्चन्द्रगुप्तं b L ed. III—८ चन्द्रगुप्तस्य तैस्तैराज्ञा° P—९ चित्त ] चेतः Be l' Bi ed. III. V; चेतसः ed. I. II; om. in b K; उपचिनोति ] उत्पादयति K—१० अयमपि मम ] इति मम K; इति ममापि M; इत्यमपि ed. III. V—११ सहर्षम् om. in K; सखे om. in P—१२ त्वमपि P; गच्छ त्वम् N Bi; अनेनैव om. in N; एव om. in Be K M Bi—१३ छद्मना ] व्याजेनैव N; b om. पुनः—१४ गच्छ ] व्रज Be l, गच्छ त्वमनेन b M—१५ स तत्र Be—१६ हि om. in P—१७ प्रिय om. in Be—१८ °कलशो N P—१९ निवसति M; स्म after प्रतिवसति Be—२० मद्वचनात् b K Be M Bi—२१ यथा before चाणक्येन b K M Bi—२२ क्रियमाणे सत्याज्ञाभङ्गे Be l Bi—२३ समुत्तेजनदक्षैः ed. II—२४ अतिनिभृतम् ] अपि निभृतं N; अभिनिभृतं M—२५ करभ° P M; °हस्ते N b M l Bi—२६ जअदिर K; जयदुजयदु Be; जेदु M Bi—अमच्चो ] अज्जो P Be Bi—२७ अमच्च पुणो वत्तु b, वत्तु om. in Be; अ M.

एदे क्खु तिण्णि अलंकारा विकाअन्ति । ता पच्चक्खीकरेदु अमच्चो ।

**राक्ष ।** विलोक्यात्मगतम् । अहो महार्घ्याण्याभरणानि । प्रकाशम् । भद्र उच्यतां शकटदासः । परितोष्य विक्रेतारं गृह्यतामिति ।

**पुरु ।** जं अमच्चो आणवेदि । इति निष्क्रान्तः ।

**राक्ष ।** आत्मगतम् । यावदहं कुसुमपुराय करभकं प्रेषयामि । इत्युत्थाय । अपि नाम दुरात्मनश्चाणक्याच्चन्द्रगुप्तो भिद्येत । कुतः ।

मौर्यस्तेजसि सर्वभूतलभुजामाज्ञापको वर्तते
चाणक्योऽपि मदाश्रयादयमभूद्राजेति जातस्मयः ।
राज्यप्राप्तिकृतार्थमेकमपरं तीर्णप्रतिज्ञार्णवं
सौहार्दात् कृतकृत्यतैव नियतं लब्धान्तरा भेत्स्यति ॥ २४ ॥ ५२ ॥

इति निष्क्रान्ताः सर्वे ।

इति द्वितीयोऽङ्कः ।

---

१ अलङ्करणाइ N, अलंकरणसंजोआ b, अलंकारआ B₁ अलंकारसंजोआ L ed III एदं° अलंकारजेणिअ K, °जोडा Be, °जोडी l, °विसेसा ed I-II V —२ विकाअन्ति N P, विकाअदि (°जेणिअ) K, विक्कीअन्ति b B₁ ed I-II, विक्कीअन्दि ed III,V, L, विकिर्यंति Bo, विकिअति l, विक्किणन्ति M No Mss. has विक्किणिअन्ति (P. §548)— ३ °करेहि P, करेउ M—४ अमच्चो त्ति M—५ विलोक्य] दृष्ट्वा M—६ अहो P om.— ७ महार्हाणि Be M (sec. h.) l Grab, महाधनानि L, महार्घाणि N b K B₁—८ K om. the text from °भरणानि as far as यावत्—९ उच्यतामस्मद्वचनात् b, बूहि शकटदासं l— १० अमच्चो] अज्जो P—११ अहमपि b Be M l B₁ ed I V, अहमित K—१२ कुसुमपुरे N, °पुरं प्रति P, करभकं कुसुमपुराय K—१३ इति om in b K, उत्थाय] परिक्रम्य स्व° M—१४ नाम om in M l—१५ चाणक्यहतकात् N, दुरात्मा चाणक्यश्चन्द्रगुप्तान्द्भिद्येत B₁— १६ B P K L insert अथवा सिद्धमेव समीहितं पश्यामि before कुत. । कुत ] N l B₁ अथवा —१७ चाणक्यो मदपाश्रयात् N—१८ राज्यावाप्ति° P—१९ °प्रतिज्ञाभरं P.

ततः प्रविशति कञ्चुकी ।

कञ्चु ।

रूपादीन्विषयान्निरूप्य करणैर्येनात्मलाभस्त्वया
लब्धस्तेष्वपि चक्षुरादिषु हताः स्वार्थावबोधक्रियाः ।
अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि मे
न्यस्तं मूर्ध्नि पदं तवैव जरया तृष्णे मुधा ताम्यसि ॥ १ ॥ ५४ ॥

परिक्रम्याकाशे । भो भोः सुगाङ्गप्रासादाधिकृताः पुरुषाः । सुगृहीतनामा देवश्चन्द्रगुप्तः समाज्ञापयति । प्रवृत्तकौमुदीमहोत्सवरमणीयं कुसुमपुरमवलोकयितुमिच्छामि । तत्क्रियन्तामस्मद्दर्शनयोग्याः सुगाङ्गप्रासादस्योपरिभूमय इति । आकाशे आकर्ण्य । किं कथयन्ति भवन्तः । आर्य किमविदितं एवायं देवस्य चन्द्रगुप्तस्य कौमुदीमहोत्सवप्रतिषेध इति । आः दैवोपहताः किमनेन वः प्राणहरेण कथोद्घातेन । शीघ्रमिदानीम्—

---

१ कञ्चु° । सनिर्वेदम् । K—२ मे] ते M L; ममाज्ञाविधेयानि Grab; यतो मेऽङ्गान्याज्ञाविधेयानि Vat.—३ तवैव ]तदेव P; तथैव K—४ ताम्यसि] माद्यसि ed I. II. म्लाना भवसि Grab—५ भोः once only B l—६ सुगाङ्ग° N Be M Ll; B P K सुगाङ्ग°.—७ M om. पुरुषाः—८ °नामधेयो l.—९ M om. the text from प्रवृत्त° to इच्छामि—१० रमणीयं] om. in K (°महोत्सवं); °रमणीयतरं N—११ संक्रियन्तां L—१२ सुगांग N Be M L l; B P K स्र°—१३ प्रसादोपरि° M;K om. उपरि; l उपवन—१४ N K Bi om. इति; °भूमय इति । तत्किं चिरयन्ति भवन्तः Be l ed. II—१५ M. om. आकाशे आकर्ण्य; N K Bi om. आकर्ण्य.—१६ कथयन्ति भवन्तः] मृष Ll—१७ किमपि विदितमेवार्यस्य यदयं देवस्य K; कमिदमविदित Bo १८—सद्यः प्राण° L; °हरणेन N; °हरेणैव Be—१९ कथोपघातेन P; कथोपोद्घातेन N Be L.

आलिङ्गन्तु गृहीतधूपसुरभीन् स्तम्भान् पिनद्धस्रजः
संपूर्णेन्दुमयूखसंहतिरुचां सचामराणां श्रियः ।
सिंहाङ्कासनधारणाच्च सुचिरं संजातमूर्छामिव
क्षिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुगृह्णातु गाम् ॥ २ ॥ ५५ ॥

आकाशे । किं कथयन्ति भवन्तः । एते त्वरामह इति । भद्रास्त्वर्यतां त्वर्यताम् । अयमागत एव देवश्चन्द्रगुप्तः । य एषः

सुचिरश्रेधैरङ्गैः पथिषु विषमेष्वप्यचलता
चिरं धुर्येणोढा गुरुरपि भुवो यास्य गुरुणा ।
धुरं तामेवोच्चैर्नववयसि वोढुं व्यवसितो
मनस्वी दम्यत्वात् स्खलति न न दुःखं वहति च ॥ ३ ॥ ५६ ॥

नेपथ्ये । इत इतो देवः ।

ततः प्रविशति राजा प्रतीहारी च ।

**राजा** । स्वगतम् । राज्यं हि नाम राजधर्मानुवृत्तिपरतन्त्रस्य नृपतेर्महद-प्रीतिस्थानम् । कुतः ।

परार्थानुष्ठाने श्लथयति नृपं स्वार्थपरता
परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः ।

---

१ धूप] धूम N K, गन्ध M—२ धारणात्] वारणात् K ed I, तत्सिंहासनधारणात् B Grah Vat—३ P M om आकाशे, श्रुत्वा Be I —४ किं भूथ । आर्य इदमनुष्ठीयते देवस्य शासन-मिति L (omitting एते त्वरामह इति) ed III एते वयम् M —५ त्वर्यतां once only P K, त्वरध्वं त्वरध्व Be N (त्वरयन्त्वरध्वं), त्वरध्व Ll, भद्रास्त्वरन्ताम् B₁, B adds after it नेपथ्याभिमुखमवलोक्य —६ आगच्छत्येव N, K om एव; Be om देव.—७ प्रचलिता B, अप्यचलता N P K M Ll B₁—८ न न दुःखं] च दुःखं न सहते N, न च दुःखं वहति च K L (दुःखं) B₁, न वा दुःखं न सहते Be, न च दुःखं न सहते (in marg वहति) l, ..खं च वहति M —९ N Be om नेपथ्ये; नेपथ्ये कञ्चुकी B, ने° प्रतीहारी इतो२ K; Be has only कञ्चुकी— १० नहि B₁—११ अनुवृत्ति] अर्थवृत्ति K—१२ परतन्त्रस्य] दुःस्थितस्य K M, परस्य Be I B —१३ नृपते ] भूमिपते. B, नर° N M —१४ जडयति N Be I B₁, श्लथयति P M Grah, रहयति B K (वह°), दहय (?) L—१५ नृपं स्वार्थं ] परस्वार्थपरतां M

परार्थश्चेत्स्वार्थादभिमततरो हन्त परवान्
परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः ॥ ४ ॥ ५७ ॥

अपि च । दुराराध्या राजलक्ष्मीरात्मवद्भिरपि राजभिः । कुतः ।

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते
मूर्खान् द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।
शूरेभ्योऽभ्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥ ५ ॥ ५८ ॥

अन्यच्च । कृतककलहं कृत्वा स्वतन्त्रेण त्वया किंचित् कालान्तरं व्यवहर्तव्यमित्यार्योपदेशः । स च कथमपि मया पातकमिवाभ्युपगतः । अथवा शश्वदार्योपदेशसंस्क्रियमाणमतयः सर्वदैव स्वतन्त्रा वयम् । कुतः ।

इह विरचयन् साध्वीं शिष्यः क्रियां न निवार्यते
त्यजति तु यदा मार्गं मोहात्तदा गुरुरङ्कुशः ।
विनयरुचयस्तस्मात्सन्तः सदैव निरङ्कुशाः
पदमपि यतः स्वातन्त्र्येभ्यो न यान्ति पराङ्मुखाः ॥ ६ ॥ ५९ ॥

---

१ चेत् ] च M—२ चेत्ति N K Bi—३ दुराबाधा P K; दुराराध्या Be, Ll ed. II —४ राज] om. in K Ml, राज्ये° Be—५ आत्मविद्भिः K Be M l—६ K M om. कुतः—७ मृदोः M—८ त्रासाद ] त्रस्ता M—९ मूर्खं B (र्खां) K Bo M Bi—१० अभ्यधिकं] अप्यधिकं B K Bo l Bi—११ अहो] अपि B K Grah—१२ वेश्यवनिता N; वारवनिता K—१३ कृतककलहं कृत्वा om. in M Bi—१४ स्वतन्त्रेण त्वया ] स्वातन्त्र्येण L—१५ किंचित्काले P K B, कालान्तरं N Be M L—१६ व्यवहर्तव्यम् ] वर्तितव्यम् P—१७ उपदेशः] आदेशः N P Be Ml Bi—१८ स च कथमपि] तत्कथङ्कथमिव N, स च मया कथमपि B, स मया कथं कथमपि P, स च कथं कथमपि K—१९ पातकमिव] महापातकमिव NK; पातक इव B; महापातकवद् P, स च कथमपि महापातकमिव Bi—२० शश्वद्] सदा Be l Bi—२१ °संस्कृत° B—२२ अस्वतन्त्रा B P M Bi ed. I—२३ विचरयन् B—२४ तु] च P, हि Be—२५ मोहान्मार्गम् N—२६ पदमपि] परतरम् N Be M L l Bi, यतः] यतिः B, अति (!) N, अतः Bo L l Bi ed. II, अपि M—२७ न यान्ति ] वयं हि N K Be M L l Bi, यतः पदमपि स्वातन्त्र्येभ्यः पराङ्मुखा न यान्ति न गच्छन्ति एतेनामात्यस्य स्वतन्त्रता निषिद्धा तथा च परायत्तस्य धन्द्रगु° Vat.

प्रकाशम्[1] । आर्य[2] वैहीनरे सुगाङ्ग[3]प्रासादमार्ग[4]मादेशय ।

कञ्चु । इत इतो देवः ।

राजा[5] । परिक्रामति ।

कञ्चु । परिक्रम्य । अयं सुगाङ्ग[6]प्रासादः । शनैःशनैरा[7]रोढुमर्हति देवः[8] ।

राजा । नाट्येनारुह्य[9] दिशोऽवलोक्य । अहो[10] शरत्समयसंभृतशोभाविभू[11]तीनां दिशामतिशयरमणीयता । संप्रति हि[12] ।

शनैः शान्ताकूताः[13] सितजलधरच्छेदपुलिनाः
समन्तादाकीर्णाः[14] कलविरुतिभिः सारसकुलैः ।
चिताश्चित्रा[15]कारैर्निशि विकचनक्षत्रकुमुदैः[16]
नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः ॥ ७ ॥ ६० ॥

अपि च ।

अपामुद्वृत्तानां निजमुपदिशन्त्या स्थितिपदं[17]
दधत्या शालीनामवनतिमुदारे सति फले ।
मयूराणामुग्रं विषमिव हरन्त्या[18] मदमहो
कृतः[19] कृत्स्नस्यायं विनय इव लोकस्य शरदा ॥ ८ ॥ ६१ ॥

१ M om प्रकाशं—२ P Bi om आर्य—३ सुगांग° N Be Bi M L, सुगांग° B P K—४ N Bi om °मार्ग—५ K Be M have instead of राजा° परिक्रम्य only परिक्रामति । (परिक्रम्य); Bi नाट्येन परिक्रम्य—६ सुगांग N M L, सुगांगा एव प्रसादः Be, सुगांग B P K—७ शनैः once only K—८ देवः ] आर्यः Be—९ आरुह्य ] Be om, अवरुह्य B K अवलोक्यारोहसि दिशोऽवलोक्य P, दिशो Be om, अवलोक्य ] विलोक्य M—१० अहो ] M अयो; Bi om —११ °संभृतशोभा विभ्रतीनां P, °समुद्भृतशोभावतीनां B Grab, °सद्ध(?)-संभृतशोभाविभूतीनां N, °शोभाविभूतीनां M, °संभृतशोभाविभूतीनां दिशाम् Be, °शोभां विभ्रतीनां K (without संभृत); °संगमसंभृतशोभाविभूतीनां Bi, °शोभानां L—१२ संप्रति हि ] कुत. B P Be K l, om in Bi—१३ शान्ताकूता. ] शान्ताकृताः B (perhaps to be read as °कृ°); शान्तीभूताः P, शान्तकृतः K; शान्ताकाराः Be l Bi, शान्तायेताः M, शान्ताकृता Vat, श्यामीभूताः L—१४ समन्तात् ] पुरस्तात् P Be l—१५ चित्राश्चि° K; चित्राकारा M—१६ कुमुदैः ] कुसुमैः B—१७ स्थितिपथम् N ed. H—१८ वहन्त्या N—१९ कृतः ] हृतः P—

इमामपि[1]

भर्तुस्तथा कलुषितां बहुवल्लभस्य
मार्गे[2] कथंचिदवतार्य[3] तनूभवन्तीम् ।
सर्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिन्धुपतिं प्रसन्नाम् ॥ ९ ॥ ६२ ॥

समन्तान्नाट्येनावलोक्य[4] । अये[5] कथमप्रवृत्तकौमुदीमहोत्सवं[6] कुसुमपुरं पश्यामि[7] । आर्य वैहीनरे अथा[8]स्मद्वचनाद्[9]आघोषितः कुसुमपुरे कौमुदीमहोत्सवः ।

कञ्चु । देव[10] अथ किम् । आघोषितो देवस्याज्ञया कुसुम[11]पुरे कौमुदी महोत्सवः ।

राजा । आर्य[12] तत्किं[13] न परि[14]गृहीतमस्मद्वचनं पौरजनेन[15] ।

कञ्चु । कर्णौ पिधाय । देव[16] शान्तं पापम् । अस्खलितपूर्वं[17] पृथिव्यां[18] देवस शासनं[19] कथं[20] पौरेषु[21] स्खलितुमर्हति ।

राजा । आर्य वैहीनरे[22] यद्येवं[23] तत्किम[24]प्रवृत्त[25]कौमुदीमहोत्सवमद्यापि कुसुमपुरं पश्यामि[26] । पश्य ।

धूर्तैरन्वीयमानाः स्फुट[27]चतुरकथाकोविदैर्वेशनार्यो[28]
नालंकुर्वन्ति रथ्याः पृथुजघनभराक्रान्ति[29]मन्दैः[30] प्रयातैः ।

---

१ इमामपि ] इमां च K Be M; अपि च P—२ मार्गं M Bi—३ अवतीर्य Be Bi—४ P K M om नाट्येन—५ P om. अये; कथम् ] तत्कथम् N B Be, किमेतद् M—६ °महोत्सवमेव N M, K om. the text from °पुरं to राजा—७ N P Be Bi om. पश्यामि; M अद्यापि instead—८ P om. अथ; किमस्मद्वचनाद् Bi—९ भवता कौमुदीमहोत्सवः N—१० M om. देव अथ किम्; Bi om. देव—११ कुसुम B om.—१२ आर्य ] आः N—१३ तत्किं ] तदेवं किं ed. II; किमस्मद्वचनं परि° M—१४ P B Be om. परि—१५ °जनेन ] °जनैः M, पौरैः Bi—१६ P M om. देव; शांतंपापं M—१७ अस्खलितपूर्वं देवस्य पृ° एव शासनम् K; M om. पूर्वं—१८ पृथिव्यामपि P M—१९ शासनमिति B—२० कथम् ] तत्किम् K—२१ पौरेषु ] पौरजनेषु स्खलिष्यति M—२२ P M om. आर्य वैहीनरे—२३ यदेवं N, तत् M om.—२४ कथम् P, किमयम् N Be—२५ अद्यापि before अप्रवृत्त° N K; एव after °महोत्सवम् N—२६ पश्यामि ] अवलोकयामि Bi—२७ स्फुट ] रति B; M om.—२८ वेश्यनार्यो N—२९ आक्रान्त Be— ३० मन्दप्रयाताः K—

अन्योन्यं स्पर्धमाना न च गृहविभवैः स्वामिनो मुक्तशङ्काः
साकं[1] स्त्रीभिर्भजन्ते विधिमभिलेपितं[2] पार्वणं पौरमुख्याः ॥ १० ॥६२ ॥

कञ्चु । देव एवमेतत्[3] ।

राजा । किमेतत् ।

कञ्चु । आं इदं[4] ।

राजा । आर्य[5] स्फुटमभिधीयताम् ।

कञ्चु । देव[6] प्रतिषिद्धः[13] कौमुदीमहोत्सवः ।

राजा । सक्रोधम्[7] । आः[8] केन ।

कञ्चु । नातः[9] परमस्माभिर्देवो[10] विज्ञापयितुं शक्यते ।

राजा । न[11] खल्वार्येण चाणक्येनापहृतः[12] प्रेक्षकाणामतिशयरमणीयश्चक्षुषो विषयः[14] ।

कञ्चु । देव[15] जीवितुकामः[16] कोऽन्यो देवस्य शासनमुल्लङ्घयिष्यति[17] ।

राजा । [18]शोणोत्तरे उपवेष्टुमिच्छामि ।

प्रती । देव[19] एदं[20] सीहासणं[21] । उवविसदु[22] देवो[23] ।

राजा । नाट्येनोपविश्य[24] । आर्य वैहीनरे आर्यचाणक्यं[25] द्रष्टुमिच्छामि ।

कञ्चु । यदाज्ञापयति देवः । इति निष्क्रान्तः ।

ततः प्रविशति कोपानु[26]विद्धां चिन्तां नाटयन्स्वभवनगतः कृतासनपरिग्रहश्चाणक्यः[27] ।

---

१ साकं ] सार्धं N, स्त्रीभिः सार्धं M—२ अभिलपितुं P B—३ एतत् ] एव Be Bi—४ आं इदं ] P K. आं इदमेवम् N. ननु इव B, देव इदं Be M, अत इदं Bi—५ आर्य ] P om., आः M—६ M om. देव—७ सक्रोधं ] सरोपं M, P om.—८ आर्य आः केन od II; K om. आः केन; P om. आः—९ देव नातः N B P Be M—१० P M om. देवो; शक्यते ] शुध्यते P—११ आर्य खलु N—१२ आर्यचाणक्येन Be M; आचार्यचाणक्येन B—१३ प्रतिपिद्धः P—१४ विषय इति B, कौमुदीमहोत्सवः instead of च°विषयः Bi, P om. रमणीय—१५ देव M om.—१६ जीवितकामो K, जीवितुकामो देवस्य कोऽन्यो P—१७ उल्लङ्घयति B K; अतिवर्तते L—१८ राजा । सक्रोधं । Be—१९ देव N B om.—२० एदं ] एअं Be—२१ सिंहासणं P L Be (see h), इदमासनम् पुत्थ उअविसदु K, इदमासणं Bi—२२ उपविसदु N; उअ° B—२३ देओ N B K Be, अज्जो P—२४ M om. नाट्येन; Be M om. आर्य; Bi om. आर्य वैहीनरे—२५ अकृतकृत्यान्तरान्तरार्यं before द्रष्टुं B, अकृतकृत्यान्तरम् before आर्य° L—२६ कोप° ] क्रोध° K—२७ कृतासनपरिग्रहः ] आसनस्थः M Bi, चाणक्यः ] कौटिल्यः N B—

चाण । आत्मगतम्[1] । कथं स्पर्धते[2] मया सह दुरात्मा राक्षसहतकः[3] । कुतः ।

कृतागाः[4] कौटिल्यो भुजग इव निर्याय नगराद्
यथा नन्दं[5] हत्वा नृपतिमकरोन्मौर्यवृषलम् ।
तथाहं मौर्येन्दोः श्रियमपहरामीति[6] कृतधीः
प्रभावं[7] मद्बुद्धेर्[8]अतिशयितुमेषे[9] व्यवसितः ॥ ११ ॥ ६४ ॥

प्रत्यक्षवदाकाशे[10] लक्ष्यं बद्ध्वा । राक्षस राक्षस[11] विरम्यतामस्माद्दुर्व्यवसितात्[12] ।

उत्सिक्तः[13] कुसचिवदृष्टराज्यतन्त्रो[14]
नन्दोऽसौ न भवति चन्द्रगुप्त एषः ।
चाणक्यस्त्वमपि न चैव[15] केवलं ते
साधर्म्यं मदनुकृतेः प्रधानवैरम्[16] ॥ १२ ॥ ६५ ॥

विचिन्त्य[17] । अथवा नातिमात्रमस्मिन्वस्तुनि[18] मया मनः[19] खेदयितव्यम् । कुतः ।

मद्भृत्यैः[20] किल नाम[21] पर्वतसुतो व्याप्तः प्रदिष्टान्तरैः[22]
उद्युक्तैः[23] स्वनियोग[24]साधनविधौ सिद्धार्थकाद्याः स्पशाः[25] ।

---

१ आत्मगतं om. in B K Be M—२ मया स्पर्धते K—३ हतकः om. in P B Bo M—४ कृतागाः N P Be M; ed. I. II. कृतागाः B K Grah. Vat. Ratinâtha—५ नन्दान् K N Bo M—६ अपहरामीति व्यवसितः कृतधीः Be—७ प्रभावम् ] प्रकर्षं L Bi—८ मद्बुद्धेर् P—९ एष] एष P—१० प्रत्यक्षवत् M om; लक्ष्ये Bo M—११ राक्षस once only B P M—१२ Bo om. दुर्; दुर्व्यवसनात् L—१३ कुतः N K Bo M Bi before उत्सिक्तः—१४ तन्त्रो ] °भारो L Bi—१५ च नैव N K Bo M ed. I. II.; न चैव B P—१६ वैरं ] in marg. तैय Bo (प्रधानतैय); the leaf of Ms. M is partly broken—१७ P om. विचिन्त्य; B adds स्वगतं—१८ अस्मिन्नतिमात्रम् P; अतिमात्रं मयात्र वस्तुनि N; Bi om. मया—१९ मनः ] आत्मा खेदयितव्यः B K—२० मद्भृत्यैर्दि...M—२१ नाम ] सोऽपि L—२२ प्रविष्टान्तरैः B P Bo L Bi, Vat. explains प्रदिष्टान्तरैः by कृतरूपान्तरैः; Grah. प्रदिष्टमादिष्टं अन्तरं छिद्रं स्थानं येभ्यस्ते; see Râm. IV, 7, 11: दोषस्य नान्तरं दातुमर्हसि; प्रहरधान्तरैः ed. I; प्रद° N—२३ मनुयुक्ताः B—२४ सुनियोग° K—२५ स्पशाः] चराः B (sec. h.) P K Be (sec. h.)—

कृत्वा संप्रति कैतवेन कलहं मौर्येन्दुना राक्षसं
भेत्स्यामि स्वमतेन भेदकुशलो देवंप्रतीपं द्विषः ॥ १३ ॥ ६६ ॥

प्रविश्य कञ्चुकी । जनान्तिकम् । कष्टा खलु सेवा नाम । कुतः ।

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभाद्
अन्येभ्यश्च भवन्ति येऽस्य भवने लब्धप्रसादा विटाः ।
दैन्यादुन्मुखदर्शनोपलपनैः पिण्डार्थमायस्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥१४॥६७॥

परिक्रम्यावलोक्य च । इदमार्यचाणक्यस्य गृहम् । यावत् प्रविशामि ।

नाट्येन प्रविश्यावलोक्य च । अहो राजाधिराजमन्त्रिणो गृहविभूतिः । कुतः ।

उपलशकलमेतद्भेदकं गोमयानां
वटुभिरुपहृतानां बर्हिषां स्तूपमेतत् ।
शरणमपि समिद्भिः शुष्यमाणाभिराभिः
विनमितपटलान्तं दृश्यते जीर्णकुड्यम् ॥ १५ ॥ ६८ ॥

---

१ राक्षसात् N only all other Mss राक्षस—२ स्वमतेन ] स्वयमेव B P M (the following syllables being broken off)—३ देवमतीप ] देव प्रतीप B P K Bo (°पो), °स्नेप प्रतीप L द्विष N—४ जनान्तिक N only—५ कष्टा] कष्ट B P—६ स्वगत after नाम K, P om नाम । कुत , B₁ om नाम—७ च] पि K भवन्ति] वसन्ति P वसन्ति L—८ उन्मुखदर्शनोपलपनै ] B P B₁ उन्मुखदर्शनेऽपि लल्पनै N उन्मुखदर्शनेन वल्गनै K उन्मुखदर्शनेन लुठनै ed I, °अपलपनै L ed. II III, M defective—९ पिण्डार्थ ] मेवार्थम् L—१० आयस्यत ] आयास्यत B K Grah आपद्यत N आसेवत B₁—११ N P K B om अवलोक्य च, Ch begins with °क्य च—१२ आर्यचाणक्यस्य P Be—१३ गृहमिति B आश्चर्यं चाणक्यगृ° P—१४ M om नाट्येन—१५ महाराजाधि° K, राजाधिराजस्य P M—१६ K L ed III V om गृह Ch ed I II om वि—१७ कुत ] om in P B₁ तथा हि K Ch—१८ उपहृतानां ] उपहृताना B—१९ स्तूपम् ] B in marg समूह , स्तोमम् N Bo (s.c h) Ch—२० समिद्भिश्शुष्यमाणा भिरन्तर M—२१ विनमित° ] विलसित P Ch—२२ दृश्यते B₁—२३ °कुड्यं ] °कल्प M—

ततः स्थानेऽस्य वृषलो देवश्चन्द्रगुप्तः । कुतः ।

स्तुवन्त्यश्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः
प्रवाचः कार्पण्याद्यदवितथवाचोऽपि कृतिनः ।
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा
निरीहाणामीशस्तृणमिव तिरस्कारविषयः ॥ १६ ॥ ६९ ॥

विलोक्य सभयम् । अये तदयममात्यश्चाणक्यस्तिष्ठति । स एषः

यो नन्दमौर्यनृपयोः परिभूय लोकम्
अस्तोदयावुपदिशन्नविभिन्नकालम् ।
पर्यायपातितहिमोष्णमसर्वगामि
धाम्नातिशाययति धाम सहस्रधाम्नः ॥ १७ ॥ ७० ॥

जानुभ्यां भूमौ निपत्य । जयतु जयत्वार्यः ।

चाण । नाट्येनावलोक्य । वैहीनरे किमागमनप्रयोजनम् ।

कञ्चु । आर्य प्रणतिसंभ्रमचलितभूमिपालमौलिमणिशिखापिशङ्गीकृतपादपद्मयुगलः पादयोरार्य मणिपत्य देवश्चन्द्रगुप्तो विज्ञापयति । अकृतक्रियान्तरायमार्यं द्रष्टुमिच्छामीति । 

१ तत ] ततः N Be M—२ खल्वस्य सुरप्रेक्षको वृषलो B1—३ °गुप्त इति N Ch B1—४ स्तुवन्ति श्रान्ता° Ch L ed III—५ यदवितथ° ] अवितथ° K—६ कृतिन ] पुरुष Be पुरुषा K Ch L ed III V—७ सकल ] निखल M (निखिल ?)—८ निरीहाणा ] निराशानां M—९ अये om in Be M, अमात्य° B, आचार्य K, आर्य N, आर्य °Be Ch M B1—१० स एष ] स एव Ch, om in B P Be (sec. h.) B1, मौर्यनन्द° K—११ उपदिशति P N (°स°), प्रदिशति K, आदिशन् Be Ch L B1 अतिदिशन् M, प्रतिदिशन् Grab Vat —१२ अविभिन्नकालम् ] प्रविभिन्नकाल K, अप्रतिभिन्नकाल Ch L B1 Be (°भिन्न°?), परिगृह्य कालम् M— १३ हिमोष्ण P —१४ सहस्रधाम्न ] सहस्ररश्मे B—१५ जयतु once only N Ch, जयति B B1 जयतिर P K १६ आर्यचाणक्य N B आचार्य K—१७ M om नाट्येनावलोक्य—१८ किमत्र N—१९ आर्य om in P Ch M—२० प्रणतससंभ्रम° L, सभ्रमे Be P om संभ्रम, प्रचलित° M, चालित Be समुच्छलित B1 समुच्चलित ed I II—२१ °भूमि] भू B—२२ मणि om in Ch, मणिद्युति P Be M, मौलिमालामाणिक्यशकलशिखा° L—२३ पिशङ्गितपाद K, युग N P K—२४ पादपद्मयोरार्यस्य Be, आर्य om in B—२५ प्रणिपत्य ] प्रणम्य M, निपत्यार्यं K °युगल सुगृहीतनामधेयो देवश्चन्द्रगुप्तो आर्यं शिरसा प्रणम्य वि° L —२६ कृतक्रियान्तरायमन्तरेण N, अकृतक्रियान्तरम् M, अकृतक्रियान्तरान्तरायम् B, अकृतक्रियान्तरायम् L, क्रियान्तरायमन्तरेण ( in marg. विना ) P—२७ इति om in N Ch B1—

चाण। वृषलो मां द्रष्टुमिच्छति। वैहीनरे न खलु वृषलस्य श्रवणपथमुपगतोऽयं[3] मया कृतः कौमुदीमहोत्सवप्रतिषेधः।

कञ्चु। आर्य अथ किम्।

चाण। सक्रोधम्। आः केन कथितम्।

कञ्चु। भयं नाटयति। प्रसीदत्वार्यः। स्वयमेव सुगाङ्गप्रासादगतेन देवेनावलोकितमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम्।

चाण। आं ज्ञातम्। दुष्ट तैतो भवद्भिरेव मदन्तरेण प्रोत्साह्य कोपितो वृषलः। किमन्यत्।

कञ्चु। सभयं तूष्णीमधोमुखस्तिष्ठति।

चाण। अहो राजपरिजनस्य चाणक्यस्योपरि प्रद्वेषे[21] पक्षपातः। अथ क वृषलस्तिष्ठति।

कञ्चु। आर्य सुगाङ्गप्रासादगतेन देवेनाहमार्यस्य पादमूलं प्रेषितः।

चाण। उत्थाय। सुगाङ्गप्रासादमार्गमादेशय।

कञ्चु। इत इत आर्य। उभौ परिक्रामतः।

---

१ मां द्रष्टुमिच्छति वृषलो P K, B Be Bi om, these four words, किं मां द्रष्टुमिच्छति M—२ पथ om. in M, उपगतो ] गतो P K, आगतो Be—३ P om. ऽयं; मया om. in Ch B1, Be om मया कृतः—४ कृतप्रतिषेधः कौमुदीमहोत्सव इति P—५ आर्य om. in N M—६ सक्रोधम् ] om. in N K, सकोपं M—७ Bi om आः—८ भणितम् P—९ सुगांग P B K, स्र° Ch (orig.)—१० देवेन om in Ch M B1, after पुरम् K—११ आं] आ N B, आः Ch, Be M, om—१२ K Be M om. ज्ञातं—१३ दुष्ट ] B only, तिष्ठ Be Ch M, तिष्ठ २ Bi भोस्तिष्ठ २ P, तिष्ठतु तावदेतत् N, om in K L—१४ ततो om in K—१५ एव ] एवम् K om in P Be M—१६ मद् ] माम् B1, Be L om—१७ अन्तरे B, अन्तरा L, वृषल इति M—१८ तूष्णीमेव B, सभयं ] भयं नाटयन् P.—१९ °परिग्रहस्य N—२० चाणक्योपरि P, चाणक्य° K, चाणक्यं प्रति B—२१ द्वेषे P K, प्रद्वेषे N, द्वेषातिशये B, महान् द्वेष° Ch, द्वेष° L द्वेषः Bi, Be M om, विद्वेषे ed. I. II—२२ पक्षपातातिशयः B M—२३ कथय क K, वृषलः कुत्र B—२४ भयं नाटयन् B Ch B1—२५ सुगांग P B K, सु° Ch (sec. h; orig. स्र); M om. प्रासाद and देवेन—२६ आर्य° P—२७ K. om. उत्थाय—२८ कञ्चुकिन् before सुगा° Be Ch; सुगांग° P B K; सु (?) Ch, N K om. मार्ग.—२९ आर्यः ] अमात्यः M—३० K om. उभौ परिक्रामतः—

कञ्चु । अयं सुगाङ्गप्रासादः । शनैःशनैरारोढुमर्हत्यार्यः ।

चाण । नाट्येनारोहावलोक्य च सहर्षमात्मगतम् । अये सिंहासनमध्यास्ते वृषलः । साधु साधु ।

नन्दैर्विमुक्तमनपेक्षितराजवृत्तै-
अध्यासितं च वृषलेन वृषेण राज्ञाम् ।
सिंहासनं सदृशपार्थिवसत्कृतं च
प्रीतिं त्रयस्त्रिगुणयन्ति गुणा ममैते ॥ १८ ॥ ७१ ॥

उपसृत्य । विजयतां वृषलः ।

राजा । आसनादुत्थाय चाणक्यस्य पादौ गृहीत्वा । आर्य चन्द्रगुप्तः प्रणमति ।

चाण । पाणौ गृहीत्वा । उत्तिष्ठोत्तिष्ठ वत्स ।

आ शैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासारशीताद्
आ तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य ।
आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां
चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ १९ ॥ ७२ ॥

राजा । आर्यप्रसादादनुभूयते एवैतत् । नाशास्यते । उपविशत्वार्यः । उभौ यथासनमुपविष्टौ ।

---

१ आर्य अथ N Be M ।—२ सुगाग P B K —३ शनै B Be Bi—४ अवरुह्य B Bo (orig ) Ch विलोक्य N, अवलोक्य आरुह्य च P, Be om आत्मगत—५ अये आसन सिंहासन B—६ साधु M—७ विमुक्त ] विमुक्त B Be L Grah—८ राजवृत्ते ] B, °राजवर्त्मैः N M, राजराजैर् K Be Ch, राजतन्त्रैः P—९ सत्कृत ] सगत N P K Bo Ch L Bi (Grah. Madras Copy, but IO Copy सगत, in the interpretation सत्सहन पूजित), समगुह M—१० प्रयस्] P M Grah Ratinâtha पता K Ch L ed I II, पुन N, मूढा Bo Bi—११ त्रिगुणयन्ति] प्रगुणयन्ति Bo L Bi Grah. (Madras Copy, IO त्रि) ed II M om गुणयन्ति १२ चा° गृहीत्वा om in P K Bo Ch M from गृहीत्वा up to °स्यार्णवै° om in Ch—१३ वत्स उत्तिष्ठोत्तिष्ठ B वत्स तिष्ठ तिष्ठ पश्य Be, वत्समभ्युत्थाय N,—१४ शैली P, धुनी] नदी N B M L—१५ शीताल ] वर्षात् N B Bo Bi—१६ आ तीरात् ] औप्रामात् Be तीरात्तरंक° L—१७ राग ] धाम L—१८ स्फुरित ] सुरित P—१९ रुचो ] निगात् K—२० भीत K—२१ अनुभूयते ] °भूयाम् P—२२ नाशास्यते om in Bi, शास्यते N, नैतत्प्राशास्य M, नाशास्य K—

नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रो चिरमवतु हरेर्दृष्टिराकेकरो वः ॥ २१ ॥ ७४ ॥

द्वितीयः ।

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतोः
जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम् ।
दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपाः
नाज्ञाभङ्गं सहन्ते नृवर नृपतयस्त्वादृशाः सार्वभौमाः ॥ २२ ॥ ७५ ॥

अपि च ।

भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः ।
परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥ २३ ॥ ७६ ॥

चाणक्यः । आकर्ण्यात्मगतम् । प्रथमं तावदिष्टदेवतारूपकेण प्रवृत्तशरद्गुणप्रख्यापनमाशीर्वचनम् । इदमपरं किमिति नावधारयामि । विचिन्त्य । आं ज्ञातम् । राक्षसस्यायं प्रयोगः । दुरात्मन् राक्षस दृश्यसे । जागर्ति खलु कौटिल्यः ।

राजा । आर्य वैहीनरे दीयतामाभ्यां वैतालिकाभ्यां सुवर्णशतसहस्रम् ।

कञ्चुकी । यदाज्ञापयति देवः । इति उत्थाय परिक्रामति ।

---

१ नागाङ्कं B (P sec. h.), all other MSS नागांक —२ अतिताम्रा M, निद्रातंद्रासिताम्रा B1—३ आकेकरं दुरालोके (B sec h in marg)—४ सर्वोत्कर्षस्य N—५ सलिलरुचां B —६ व्यक्त° H K, अपलेप B1, °लेपात् B.—७ उपयोगेन M —८ अपरिभूताज्ञ ] अनभिभूताज्ञैः P M — ९ इव ] एव M.—१० दृश्यसे M —११ इष्टदेवतारूपकेण ] इष्टदेवतारूपेण K, इष्टदेवताप्रतिरूपकेण B, इष्टदेवतानुरूपकेण P, इष्टदेवतेति महादेव एव इष्टदेवताप्रतिरूपकत्वादस्यं प्रतिक्षणं पश्यति Grah विशिष्टदेवतास्तुतिरूपकेण N, विशिष्टदेवतारूपेण M B1, विशिष्टदेवतारूपणेन ed II —१२ °शरद्गुणप्रख्यापितम् N, प्रवृत्तशरद्गुणख्यापनम् P, शरद्गुणवर्णनया B, शरद्गुणप्रख्यापनेन K, प्रवृत्तशरद्वर्णनम् Bc, प्रवृत्तं शरत्गुणप्रख्यापना° M, प्रवृत्तशरद्गुणवर्णनम् B1, प्रवृत्तशरद्गुणप्रख्यापनम् L ed. H.—१३ इदमाशीर्वचनम् ed I. II, आशीर्वादः B, L ed. V. om, इदम् । अपरं N—१४ N Bc M om. न; K om इति न—१५ °अवधारयामः P—१६ इति विचिन्त्य Bc, आं भवतु ज्ञातं N, आः भवतु ज्ञातं Bc M B1, K om —१७ आ दुरात्मन् ed H.—१८ राक्षसहतक K Bc (sec. h.) ed. II, दृश्यसे २ N.—१९ त्वयि जागर्ति P.—२० B M Bi om. खलु—२१ अनयोर्वैतालिकयोः K; P. om. वैतालिकाभ्यां; ins. इति after सहस्रम् —२२ H om. शत°—२३ उत्थाय P H Bc om —

चाण । सक्रोधम् । वैहीनरे तिष्ठ तिष्ठ । न गन्तव्यम् । वृषल किमयमस्थान एव महानर्थोत्सर्गः क्रियते ।

राजा । आर्येणैवं सर्वतो निरुद्धचेष्टाप्रसरस्य मम बन्धनमिव राज्यं न राज्यमिव ।

चाण । वृषल स्वयमनभियुक्तानां राज्ञामेते दोषा भवन्ति । तद्यदि न सहसे तदा स्वयमेवाभियुज्यस्व ।

राजा । एते स्वकर्मण्यभियुज्यामहे वयम् ।

चाण । प्रियं नः । वयमपि स्वकर्मण्यभियुज्यामहे ।

राजा । यद्येवं तर्हि कौमुदीमहोत्सवप्रतिषेधस्य फलं श्रोतुमिच्छामि ।

चाण । वृषल कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनमित्यहमपि श्रोतुमिच्छामि ।

राजा । प्रथमं तावन्ममाज्ञाव्याघातः ।

---

१ सक्रोधं K om; सकोपं M—२ तिष्ठ once Be M, न खलु गन्तव्यं । कञ्चु । सभयं राजानमवलोकयति । चा । वृषल° M—३ वृषल २ B Be—४ M om. अयम्; M N om. एव—५ अर्थस्य K, द्रव्योत्सर्गः B, धनोत्सर्गः M—६ सक्रोधं ins. in N—७ एवमार्येण N K; आर्य एवम् P, एव M—८ सर्वतो ] सर्वत्र Be Bi—९ निरुद्धचेष्टस्य मे M, निरुद्धावकाशस्य मम बन्धनमिव B—१० K om. मम; मे N Bi—११ वृषल] २ B, M om.—१२ अनभियोगयुक्तानां M—१३ P om राज्ञाम्; संभवन्ति N M, प्रभवन्ति K, न भवन्ति B Bi—१४ तद्यदीद (म्) न N तदा यदि Bi—१५ तदा ] तत् K, ततः Be Bi, om. in M—१६ एव om in N K Be Bi—१७ वयम् after एते B K ed I II, om in N Bi ed. III.—१८ वृषल प्रियं नः B, प्रियं नः प्रियं नः P K, कल्याणं नः L, Bi om—१९ वयमपि° हे om in M—२० तेन तर्हि N B, तेनाहं तर्हि P—२१ प्रयोजनं तावत् N, °प्रतिषेधस्यैव प्रयोजनम् B, प्रतिषेधस्यैव तावत्प्रयोजनम् M, अनुष्ठानप्रतिषेधस्य किं प्रयोजनमितो तावत् Be, चाणस्य कौमुदीमहोत्सवानुष्ठानप्रतिषेधस्य किं प्रयोजनम् Bi, फलम् only K P—२२ इति तावच्छ्रोतुमिच्छामि Bi, इच्छामः K—२३ B om वृषल; K om. the whole speech of Cāṇakya from वृषल to इच्छामि—२४ अहमपि कौमुदी° B—२५ अनुष्ठानस्य ] अनुष्ठाने P, °करण° Be, तर्हि कौमुदीमहोत्सवकरणप्रयोजनं श्रोतुमिच्छामि Bi—२६ प्रयोजनम् ] फलम् N—२७ P om. इति—२८ Be M om. अहमपि°—२९ मम ] मद् P.—३० आज्ञाविघातः P Be Bi, आज्ञाया अव्याघातः N B K—

चाण । वृषल ममापि खलु त्वदाज्ञाव्याघात एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनम् । कुतः ।

अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनानाम्
आ पारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम् ।
मालेवाम्लानपुष्पा नतनृपतिशतैरुह्यते या शिरोभिः
सा मय्येव स्खलन्ती प्रथयति विनयालंकृतं ते प्रभुत्वम् ॥ २४ ॥ ७७ ॥

राजा । अथापरमपि प्रयोजनं श्रोतुमिच्छामि ।

चाण । तदपि कथयामि ।

राजा । कथ्यताम् ।

चाण । शोणोत्तरे मद्वचनात् कायस्थमचलं ब्रूहि । यद्भद्रभटप्रभृतीनां लेख्यपत्रं तत्तावद्दीयतामिति ।

प्रती । जं अज्जो आणवेदि । इति निष्क्रम्य पुनः प्रविश्य । अज्ज इदं पत्तं ।

चाण । गृहीत्वा । वृषल श्रूयताम् ।

राजा । दत्तावधानोऽस्मि ।

चाण । वाचयति । सुगृहीतनामधेयस्य देवस्य चन्द्रगुप्तस्य सहोत्था-

---

१ K om the text from वृषल as far as एव—२ ममापि खलु P om, M om वृषल, खलु —३ आज्ञाया व्याघात Bi—४ प्रतिषेधे P, निषेधस्य K—५ प्रयोजनमिति ed II, M om the text from एव as far as प्रयोजनम्—६ अम्लानपुष्पा ] आज्ञा सपुष्पा ed L—७ नतनृपतिशतैः] प्रणतनृपशतैः P, तव नृपतिशतैः N L—८ उह्यते या] उह्यमाना Bo Bi—९ प्रथयति] कथयति N Bo Bi, कथमिति L—१० राजा om in N K M—११ तथापरमपि B, अथ त्वपरं प्रयोजनम् Bi Bo (त्वं); यत्तच्छ्रोतुमिच्छामि P ed II, अथ स्वमपरमपि °श्रोतुमिच्छसि N M K (om प्रयोजनम्);—१२ चाण° om in N M—१३ तदपि] अतस्तदपि P, ततस्तदपि M N Bo Bi—१४ अचलदत्तं P ed. I II—१५ यत्तु K, मद् om in B P.—१६ लेखपत्रं N, लेख्यं M, °प्रभृतीनामितोऽपरागादपक्रम्य मलयकेतुमाश्रितानां लेख्यपत्रं L—१७ तावत् om. in K M—१८ दीयताम् ] प्रेष्यताम् B—१९ आणवेइ M, निष्क्रान्ता B—२० इमं K L Bi, इदं N—२१ पत्तअं P M L; Bo (orig.) पत्तयं P—२२ स्वस्ति before सुगृहीत ed. II. V; नामधेयस्य] नाम्नः M—२३ देवस्य om. in P Bo M Bi; देवस्य चन्द्रगुप्तस्य om. in K—

यि[1]नां प्र[2]धानपुरुषाणामितोऽपक्रम्य[3] मलयकेतुमाश्रितानां परि[4]माणलेख्य[5]पत्रम् । अत्र[6] प्रथमं तावत् गजाध्यक्षो भद्रभटः अश्वाध्यक्षः पुरुषदत्त[7]ः महाप्रतीहारस्य चन्द्रभानोर्भागिनेयो हिङ्गुरात[8]ः देवस्य स्वजनगन्धि[9]र्महाराज[10]बलगुप्त[11]ः देवस्यैव कुमार[12]सेवको राजसेनः सेनापते[13]ः सिंहलस्य[14] कनीयान् भ्राता[15] भागुरायणः मालव[16]राजपुत्रो रोहिताक्ष[17]ः क्षत्रगणमुख्यो[18] विजयवर्मेति[19] । एतावदेतत्[20] पत्रम्[21] ।

राजा । आर्य[22] एतेषाम[23]परागहेतुं[24] श्रोतुमिच्छामि[25] ।

चाण । वृषल श्रूयताम् । अत्र यावेतौ गजाध्यक्षाश्वाध्यक्षौ[26] भद्रभटपुरुषदत्तनामानावेतौ[27] खलु स्त्रीमद्य[28]मृगयाशीलौ हस्त्यश्वावेक्षणे[29]ऽनभियुक्तावि[30]त्यधिकाराभ्याम[31]वरोप्य[32] मया[33] स्वजीवन[34]मात्र एव स्थापितावित्य[35]परक्तौ स्वेनस्वेना[36]-

---

१ सहप्रस्थायिनां K, सहोत्थाना M—२ प्रधान om in Be $B_1$—३ ऽपक्रान्ताना N, वध्य मलयकेतु Be $B_1$, वध्य° N L, नृपमलयकेतुम् K (orig )—४ परिमाण ] प्रमाण P K L—५ लेख्य K Be $B_1$ लेखपत्रं N—६ अत्र ] M om, तत्र Be $B_1$ ed II, तत्रावावेव P, यत्र तावत्प्रथममेव K, प्रथममेव तावत् Be M $B_1$, P om तावत्—७ पुरुदत्त P here and later on, चन्द्रसेनस्य—८ हिंगराज N, हिंगुरात P K ed I II, हिंरात B, डिंगिरात Be $B_1$, डिंकिरातो M, डिंगरात L—९ स्वजनगन्धि N, °गन्धी K Be M, °सम्बन्धी P L $B_1$, °समन्धी B—१० महाराज N B K, महाराजो M, महाराजपुत्रो P, महाराजवल्लभो $B_1$—११ बलदेवगुप्त L—१२ कुमारस्य K—१३ सेनाधिपते K, om in N—१४ सिंहलेश्वरस्य N, सिंहलस्य B, सिंहदत्तस्य P, सिंहलकस्य K, सिंहर्यलस्य Be, सिंहबलस्य M L, सिंहपालस्य $B_1$, सिंहबलदत्तस्य ed I II—१५ भ्राता कनीयान् P Be $B_1$, M om भ्राता—१६ मालव] मानव° K, मगध° P—१७ लोहिताक्ष॰ M—१८ क्षत्रगुण° N Be $B_1$, °मुख्यतमो N P—१९ *after* विजयवर्मेति L ed II III ins आत्मगत एते वय देवस्य कार्ये अविहिता स इति प्रकाशम् (L om. आ° and प्र°)—२० एव P, एवैतत् M, एव खलु तत् $B_1$ Be om एतावदेतत्पत्रम्—२१ पत्रकम् N P M $B_1$—२२ आर्य om in P K M—२३ अथैतेषा N, एषा M—२४ °हेतून् K; °हेतुर्यस्तम् B—२५ श्रोतुम् om. in N, श्रोतुमिच्छामि] पृच्छामि Be, विज्ञातुमिच्छामि L—२६ हस्त्यश्वाध्यक्षौ M—२७ °पुरुषदत्तनामानौ ] °पुरुषनामानौ B, °पुरुषदत्तौ M, एतौ ] तौ Be $B_1$ M, खलु om in K Be $B_1$—२८ मद्य ] मद्य B—२९ अवेक्षणेषु Be M $B_1$, अन्वेषणे K—३० अनभियुक्तौ om in Be, ed. II ins. हि before अनभि°, P एव after it इत्यधिकृत्य N—३१ अधिकारा° ] स्वाधि° ed II, अधिकारात् K M—३२ अपरोप्य N, अपकृत्य B, अपवाह्य P—३३ M om मया—३४ स्वल्पजीवन° N K, स्वजीविका ..M, °मात्रकेणै [व] N, °मात्रावेव Be $B_1$, मात्रेणैव K L—३५ स्थापितौ] अवस्थितौ P, अवस्थापितौ K, स्थापिता स्वेनस्वेनाधिकारेणैव मल° आश्रिता (?) B—३६ स्वेन स्वेन च K, M $B_1$ ins. व्यवस्थाप्य after °कारेण, स्थापितावित्ति परपक्षे स्वेनाधिकारेण गत्वा मल° L—

धिकारेण मलयकेतुमाश्रितौ । यावेतौ[2] हिङ्गुरात[3]बलगुप्तौ तावप्य[4]त्यन्तलोभाभि[5]भूतौ त्वद्दत्तं जीवनमबहु[6] मन्यमानौ तत्र[7] बहु[8] लभ्यत इति मलयकेतुमाश्रितौ । योऽप्य[10]सौ भवतः[11] कुमार[12]सेवको राजसेनः सोऽपि[13] तव प्रसादादतिप्रभूतकोप[14]हस्त्यश्वं सहसैव सुमहद्[15]ऐश्वर्यमवाप्य पुनरुच्छेद[16]शङ्कयापक्रम्य मलयकेतुमाश्रितः । योऽयमपरः[17] सेनापतेः सिंहलस्य[18] कनीयान् भ्राता भागुरायणोऽसावपि[19] तत्र काले[20] पर्वतकेन[21] सह समुत्पन्नसौहार्दः[22] तत्प्रीत्या च[23] पिता ते चाणक्येन घातित[24] इत्युत्पाद्य[25] मलयकेतुमपवाहितवान् । ततो भवदपथ्यकारिषु चन्दनदासप्रमुखेषु[26] निगृह्यमाणेषु[27] स्वदोषाशङ्कया[28][29]पक्रम्य[30] मलयकेतुमेवाश्रितः[31] । तेनाप्य[32]सौ ममानेन प्राणाः परिरक्षिता[33] इति कृतज्ञतामनुवर्तमानेन[34] पैतृकं च[35] परिचयं ज्ञात्वात्मनोऽनन्तरममात्यपदमारोपितः[36] । यावेतौ रोहिताक्ष[37]विजयवर्माणौ तावप्य[38]त्यन्तमानित्वात् स्वदायादेभ्यस्त्वया दीयमानं[39] समानम्[40]असहमानौ मलयकेतुमाश्रितौ[41] । इत्येतेषाम[42]परागहेतवः ।

---

१ वध्यमलयकेतुमेव N.—२ यौ च तौ Bi—३ हिङ्गराज N डिंगिरात° Be, डिंकि° M, डिंग° L, हिङ्गि° Bi.—४ P Be Bi om. तौ; अपि P om—५ अत्यन्तलोभाभिभूतौ] लोभा भिभूतत्वात् M, °लुब्धप्रकृती P—६ जीव्यमबहु मन्यमानौ प्राङ्गिल्पितप्रदानेनापि अपरितुष्यमाणौ P, instead of त्वद्दत्तं °तत्र K has स्वल्पजीवनमयमन्यमानौ; M transposes the two sentences यावेतौ° आश्रितौ and योऽपि °आश्रितः.—७ तत्र] ततो P—८ बहुतरं N, लभ्यमिति K—९ वध्यमलयकेतुम् P—१० यो ह्यसौ P.—११ P om भवतः—१२ K om कुमार—१३ M om. अपि—१४ अतिप्रभूत ] अतिप्रभूतं K; अतिमात्र° B, अतिमात्रं Be Bi, अनिभृत M, कोशं हस्त्यश्वं च K N (कोपं); °हस्त्यश्वः P M.—१५ महद् N तन्महद् L—१६ उच्छेद] उच्छेदन° M; आच्छेद B K, शङ्कया ] आशङ्कया K Be M, भयाद् P.—१७ M om अपर.—१८ सिंहलस्य N, सिंहलस्य सेनापतेः B, सिंहचलस्य P, सिंहलकस्य K, सिंहबलस्य Be M L Bi (घ); सिंहबलदत्तस्य ed. II.—१९ P सोऽपि—२० M. om. तत्र काले—२१ पर्वतेश्वरेण सह B—२२ समुत्पन्नसौहार्दः ] बद्धसौहार्दः N.—२३ M om च—२४ घातितश्चाणक्येन M—२५ उत्पाद्य ] व्युत्पाद्य M, रहसि त्रासयित्वा B K Be Bi, उत्पाद्य रहसि त्रासयित्वा L—२६ प्रमुखेषु Be Bi, °दासादिषु M—२७ निगृहीतेषु L—२८ Be L Bi om. स्व—२९ शङ्कया M.—३० प्रक्रम्य N, भागुरायणोऽपसृत्य K—३१ P B Be M Bi om. एव—३२ अनेन] P om. एतेन Be Bi; असौ मम प्राणरक्षक इति L—३३ रक्षिता B K—३४ अनुवर्तमानेन] अनुमन्यमानेन K, अनुरुध्यमानेन ed. II (alt.)—३५ च P om, पैतृकं विज्ञाय मनो B—३६ आरोपितः] प्राहितः B Be L Bi ed. II.—३७ रोहिताक्ष° K—३८ P om. अपि—३९ दीयमानम् ] दत्तम् B M.—४० समानम् ] P, मानं Be M Bi, सम्मानं L K, जीवनम् B, बहुसम्मानम् ed II.—४१ समाश्रितौ P.—४२ इति] एवम् P, इतीत्थम् B K M.

राजा । योऽस्य सर्वस्यैवानर्थस्य हेतुर्मलयकेतुः स आर्येणापक्रामन्कस्मादुपेक्षितः ।

चाण । वृषल मलयकेतावनुपेक्षितापक्रमणे द्वयी गतिः स्यात् । निगृह्येत वा पूर्वप्रतिश्रुतं राज्यार्धं वा प्रतिपाद्येत । निग्रहे तावदस्य पर्वतकोऽस्माभिर्व्यापादित इति कृतघ्नतायाः स्वयं हस्तो दत्तः स्यात् । प्रतिश्रुतराज्यार्धप्रदानेनापि पर्वतकविनाशः केवलं कृतघ्नतामात्रफलं स्यादिति मलयकेतुरपक्रामन्नुपेक्षितः ।

राजा । आर्य अस्तु तावदेवम् । राक्षसस्तु पुनरिहैवान्तर्नगरे वर्तमान आर्येणोपेक्षित इत्यत्र किमुत्तरमार्यस्य ।

चाण । वृषल राक्षसोऽपि खलु स्वामिनि स्थिरानुरागित्वात् सुचिरमेकत्र संवासाच्च शीलज्ञानां नन्दानुरक्तानां प्रकृतीनामत्यन्तविश्वास्यः प्रज्ञापुरुष-

---

१ यो हि सर्वस्यैवास्माकमनर्थीभूतो मलय° P, यो ऽयमस्माकं सर्व° B, यो ऽस्माकं सर्व° M आर्य सो पि अस्य सर्वस्यैवा° Bı २ स ] स कथं मलयकेतुः N, असौ मलयकेतुरार्येणापक्रामन् कस्मादुपेक्षित. B, मलयकेतु· स आर्येणापक्रामन् कस्मादुपेक्षितः P, स खलु कथं म° अपक्रामन्नु·पेक्षितः K, म° कस्मादपक्रान्त·° Bc, स कथमपक्रामन् म° M, म° कस्मादपक्रामन्नपेक्षितः Bı.—३ M. om वृषल—४ मलयकेतोरनुपेक्षणेनापक्रमणे K, मलयकेतोरप्यनुपेक्षितापक्रमणे M, अनुप्रेक्षणे Bc L, म° केतोरपक्रमणानुपेक्षणे ed H. °केतावुपेक्षितापक्रमणे Bı.—५ द्वैधी B.—६ अनुगृह्येत before निगृह्येत वा Bo in marg —७ M om वा.—८ पूर्वं B, पूर्वप्रतिश्रुतं वा N, P om पूर्वं.—९ °श्रुतार्धराज्यं K, प्रतिपद्येत P K, प्रतिपद्येत वा B —१० तत्र निग्रहे तावत्पर्वतको M, पिता पर्वतको B, अस्य ] तस्य P —११ घातितः N P —१२ कृतघ्नताया P B—१३ स्वहस्तो K L.—१४ पूर्वप्रतिश्रुतराज्यार्धे P, पूर्वप्रतिश्रुतार्धराज्य° K; प्रतिश्रुतराज्यार्धस्य Bo Bı १५ प्रदाने M, दानेन N, प्रतिपादने Bo (add वा in mar.) L Bı ed H.—१६ पर्वतक ] पर्वत K; °विनाशे N—१७ केवलमेव B Bı —१८ कृतघ्नता° P, कृतघ्नत° N, °मात्रं N, °मात्रस्य B, °मात्रा° M.—१९ °फलं N B P K, फल एव M, फल Bc (Either केवल or मात्र is superfluous), ed. V. पर्वतकविनाशे कृतघ्नतामात्रपरिहारः.—२० M om. आर्य —२१ अस्तु ] अत्र N B K Bo Bı—२२ P Bo Bı om. तु —२३ पुनर् ] तावद् M—२४ P om. एव—२५ राक्षसोऽसौ खलु N, राक्षसः खलु B, राक्षसः only M—२६ स्वामिनिस्थिरानु° N—२७ अनुरागप्यात् N K M.—२८ एकत्र ] एकात्र Bc Bı ed. H —२९ वासात् M, च in M after ज्ञानां—३० नन्दकुलानुरक्तानां P, नन्दानुरक्तप्रकृतीनां B, om. in K.—३१ विश्वास्य. B.

काराभ्यामुपेतः सहायसंपदा युक्तः कोपवानिहैवान्तर्नगरे वर्तमानः खलु महान्तमन्तःकोपमुत्पादयेत् । दूरीकृतस्तु बाह्यकोपमुत्पादयन्नपि न दुःखसाध्यो भविष्यतीत्यतोऽपक्रामन्नुपेक्षितः ।

राजा । तत्किमर्थमत्रस्थ एवोपायैर्नोपक्रान्तः ।

चाण । अथ कथमनुपक्रान्तो भविष्यति । ननूपायैरेवासौ हृदयेशयः शङ्कुरिवोद्धृत्य दूरीकृतः ।

राजा । आर्य कस्माद्विक्रम्य न गृहीतः ।

चाण । वृषल राक्षसः खल्वसौ विक्रम्य गृह्यमाणः स्वयं वा विनश्येद्युष्मद्बलानि वा विनाशयेत् । एवं सत्युभयथापि दोषः । पश्य ।

स हि भृशमभियुक्तो यद्युपेयाद्विनाशं
ननु वृषल वियुक्तस्तादृशेनासि पुंसा ।
अथ तव बलमुख्यान्घातयेत् सापि पीडा
वनगज इव तस्मात्सोऽभ्युपायैर्विनेयः ॥ २५ ॥ ७८ ॥

राजा । न शक्नुमो वयमार्यस्य वाचो वाचमतिशयितुम् । सर्वथामात्यराक्षस एव प्रशस्यतरः ।

---

१ प्रज्ञापौरपाभ्याम् B—२ कोश M, कोपवल्यान् ed. II—३ खलु Bo om, K after महान्त, स खलु N—४ कोप ] क्षोभ M—५ उपजनयेत् B—६ बाह्य K, याह्यार्थमविकुर्वन्नपि उपायैर्वंशयितु शक्य इत्ययमत्रस्थ एव हृदये शङ्कुरिवोद्धृत्य दूरीकृत L—७ अपि न ] नैव M—८ दुःसाध्यो B, दु साधो P M—९ P K भवति (om इति), N P om अत—१० अत्रावस्थ M, अत्रावस्थित Bo—११ उपायेन Bl—१२ उपक्रान्त आर्येण B—१३ N P K Bo M Bl om अथ, उपक्रान्तो Bl—१४ M Bl om एव, P om असौ—१५ हृदयेऽवस्थाय. N, हृदयोऽस्य B हृदिस्थ K—१६ शङ्कु ] शल्य M उद्धृत्य ] निक्षिप्य B—१७ All MSS excepting M L add after दूरीकृत दूरीकरणस्य चोपप्रयोजन, K दूरीकरणस्य फलमुक्तमेव—१८ M om आर्य—१९ P M om वृषल, राक्षस स्वय M—२० परिगृह्य K—२१ निगृह्यमाण Bo M Bl ed I II, निगृह्यमाण N—२२ स्वयमेव N, वा B M om—२३ युष्मद् ] अस्मद् P बल B—२४ नाशयेद्वा M—२५ अपि ] अभि M—२६ दोष स्यात् B—२७ यद्युपेदात्मनाश N—२८ वियुज K—२९ असि ] अपि N B Bo M, एव L—३० नाशयेत् ] घातयेत् P Bo L Bl—३१ वनराज N, विनेय ] वश स्यात् M—३२ वाचो ] वचसा N, L Bl om, वाच वाचा M, वाचम् ] मतिम् (orig) Bo L Bl—३३ अतिशाययितुम् P K M—३४ Bl om. सर्वथा—३५ एवात्र B K Bo Bl

चाण । सक्रोधम् । न भवानिति वाक्यशेषः । मा तावत् । भो वृषल तेन किं कृतम् ।

राजा । यदि न ज्ञायते तदा श्रूयताम् । तेन खलु महात्मना

लब्धायां पुरि यावदिच्छमुषितं कृत्वा पदं नो गले
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः ।
अत्यर्थं विपुलैश्च नीतिविभवैः संमोहमापादिताः
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः ॥ २६ ॥ ७९ ॥

चाण । विहस्य । वृषल एतत् कृतं राक्षसेन ।

राजा । अथ किम् ।

चाण । वृषल मया पुनर्ज्ञातं नन्दमिव भवन्तमुद्धृत्य भवानिव भूतले मलयकेतुरधिराज्यमारोपित इति ।

राजा । अन्येनैवेदमनुष्ठितं किमत्रार्यस्य ।

चाण । हे मत्सरिन्

आरुह्यारूढकोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूडां
लोकप्रत्यक्षमुग्रां सकलरिपुकुलोच्छेददीर्घां प्रतिज्ञाम् ।

---

१ B Bo M om. सक्रोधं.—२ मा तावत् om. in B Bo Bi; मा तावत्त्वम् N; ननु तावत् L.—३ तेन] येन N.—४ कृतमिति B.—५ राजा । किं कृतं यदि न ज्ञा° N K.—६ तदा] तत् Bo Bi; N om; श्रूयतामिति B.—७ तेन] येन N B K Bi.—८ लब्धायां Bi —९ अत्यर्थं] अत्यन्तं K.—१० विपुलैः] निपुणैः M; निपुणैः K; निपुणैः N.—११ च नीति°] स्वनीति N B L; सुनीति K Bo (in marg.)—१२ मतयो] चतयो P.—१३ न स्वेषु] मेष्टेषु N; वर्गेषु] वर्णेषु P.—१४ P हे वृ° एवमे°; M om. वृषल.—१५ अथ किं P only; एतत्कृतममात्यराक्षसेन B Bo (राक्षसेन); किमेतत्कृतममा° N; किं कृतममात्य° M.—१६ वृषल M om.—१७ भवानिव भूतले M om.—१८ अधिराज्यम्] B; अधिराज्ये पदम् P (om. इति), राजाधिराजपदम् N K; अधिराज्यपदम् M; राजाधिराजपदे योजितः Bo Bi; अधिराज्यपदे नियोजित इति L.—१९ अन्येनैवेदम्] B M B (orig.), मन्ये देवेनेदं N (°ष्ठितमिति); आर्यं इदमन्यैः P; एतत्कृतमन्यैरेव K; अस्मत्पालस्य आर्यं दैवेनेदम् ed. I. II.—२० सच्छेद] सच्छाद N; सच्छाद Bo M Bi.

केनान्येनावलिप्ता नवनवतिशतद्रव्यकोटीश्वरास्ते
नन्दाः पर्यायशूराः पशव इव हताः पश्यतो राक्षसस्य ॥ २७ ॥ ८० ॥

अपि च ।

गृध्रैराबद्धचक्रं वियति वलनया दीर्घनिष्कम्पपक्षैः
धूमैर्ध्वस्तार्कभासां सघनमिव दिशां मण्डलं दर्शयन्तः ।
नन्दानां नन्दयन्तः पितृवननिलयान् प्राणिनः पश्य चैत्याः
निर्वान्त्यद्यापि नैते स्रुतबहलवसागन्धिनो हव्यवाहाः ॥ २८ ॥ ८१ ॥

राजा । नन्दकुलविद्वेषिणा दैवेनेदमनुष्ठितम् ।

चाण । दैवमविद्वांसः प्रमाणयन्ति ।

राजा । विद्वांसोऽप्यविकत्थना भवन्ति ।

चाण । कोपं नाटयन् । वृषल भृत्यमिव मामारोढुमिच्छसि ।
शिखां मोक्तुं बद्धामपि पुनरयं धावति करः—

भूमौ पादप्रहारं दत्त्वा ।

प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः ।
प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना
परीतः कालेन ज्वलयसि पुनः कोपदहनम् ॥ २९ ॥ ८२ ॥

---

१ नवनवपतिशत° P—२ शूरा ] P (सू) B K, Grah पर्यंकशूरा ; सूताः M, भूताः N L B1—३ आरब्धचक्र M.—४ वलनया ] वलना मण्डलाकारे Vat, गमनविशेषेण संबन्धेन Grah, चलनया ed II, विचलितै L.—५ ध्वस्त ] ग्रस्त K.—६ नंदैरानन्दयन्तः L.—७ चैत्या° ] N P M Vat, चैतान् (च एतान्) B K Bo L B1 ed. II.—८ नैते ] नैके M, तेन L—९ वसावाहिनो all Mss. excepting M, (N om. some words of Telang's E).—१० Be (orig) M L राजा । अन्येनैवेदमनुष्ठितम् । चाण° । केन । राजा । नन्दकुल° (M एवम् L आ° केन )—११ आर्य नन्द° B.—१२ नन्दकुलद्वेषिणा P K B1, नन्दद्वेषिणा M—१३ M om. इदमनुष्ठितम्—१४ कोपं नाटयित्वा ] om in B, सकोपं Bo B1—१५ वृषल वृषल B B1 L—१६ कथं भृतमिव N—१७ मोक्तुमुक्तामपि M, बद्धाम् all except N M—१८ अपि पुनरयं ] पुनरपि स मे B, मम पुनर° P.—१९ चलति ] चरति B—२० प्रणाशे K.—२१ उपयान्तं K—२२ कोपदहनं B, instead of पुनः B L Be have मम

राजा । सावेगं स्वगतम् । अये तत्कथं सत्यमेवार्यः कुपितः तथा हि ।

संरम्भस्पन्दिपक्ष्मक्षरदमलजलक्षालनक्षामयापि
भ्रूभङ्गोद्भूतधूमं ज्वलितमिव पुनः पिङ्गया नेत्रभासा ।
मन्ये रुद्रस्य रौद्रं रसमभिनयतस्ताण्डवे संस्मरन्त्या
संजातोदग्रकम्पं कथमपि धरया धारितः पादघातः ॥ ३० ॥ ८३ ॥

चाण । कृतककोपं संहृत्य । वृषल वृषल अलमुत्तरोत्तरेण । यद्यस्मत्तो गरीयान् राक्षसोऽवगम्यते तदास्माकमिदं शस्त्रं तस्मै दीयताम् । इति शस्त्रमुत्सृज्योत्थाय च प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा स्वगतम् । राक्षस राक्षस एष एवं भवतः कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः ।

चाणक्यतः स्खलितभक्तिमहं सुखेन
जेष्यामि मौर्यमिति संप्रति यः प्रयुक्तः ।
भेदः किलैष भवता सकलः स एव
संपत्स्यते शठ तवैव हि दूषणाय ॥ ३१ ॥ ८४ ॥

इति निष्क्रान्तश्चाणक्यः ।

---

१ विलोक्य स्वगत K, सावेग om. in M —२ M om अये —३ तत्कथ] तर्कि P K, कथकथ M —४ सरम्भात् N, °रभा M उत्स्पदि B1 —५ पक्ष्म] चक्षु M —६ उद्भूत] उद्भेद N Be M L B1, उद्भूत and उद्भेद ed II alternatively —७ धूम] जिह्म N M.—८ पुन] पुर Be M L B1 —९ ताण्डवेषु स्मरन्त्या Bo B1 ed. III ताण्डवम् Grab —१० °कम्प M —११ पादपात Grab पादप (!) त B—१२ वरीयान्] K L M —१३ अवगम्यते om in B—१४ तस्मादिद N Be M B1 ed I II, तदेद K, तदिद L, दीयता तस्मै P —१५ शास्त्रम् M—१६ तस्मै] अस्मै M —१७ उत्थाय om in K च प्रत्यक्षवत् and लक्ष्य बद्ध्वा om in M —१८ राक्षस once N M B1 —१९ एष om. in P M B1 एव om in N B K Be एव P—२० °बुद्धि°] B om, बुद्धि P —२१ बुद्धिप्रकर्ष P K.—२२ चाणक्यत] कौटिल्यत P —२३ स्खलित°] चलितभक्तिम् N P K M L B1 —२४ एवम् B—२५ शठ] यत्त N, स तु Be B1. —२६ हि दूषणाय] विनाशनाय ed. I II

राजा । आर्य[1] वैहीनरे अद्यप्रभृत्यनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेवं[2] राजकार्याणि[3] करिष्यतीति गृहीतार्थाः क्रियन्तां प्रकृतयः[4] ।

कञ्चु । स्वगतम् । कथं निरुपपदमेवं[5] चाणक्यो नार्यचाणक्य[6] इति[7] । हन्त सत्यमेव[8] हतोऽधिकारः[9] । अथवा न खल्वत्र[10] वस्तुनि देवं दोषेणावमन्तुमर्हामि[11] । कुतः ।

स दोषः सचिवस्यैव यदसत् कुरुते नृपः ।
याति यन्तुः[12] प्रमादेन गजो व्यालत्ववाच्यताम् ॥ ३२ ॥ ८५ ॥

राजा । आर्य[13] किं विचारयसि ।

कञ्चु । देव[14] न किंचिद्विचारयामि[15][16] । किं त्वेतच्चिन्तयामि[17] । दिष्ट्या देव[18] इदानीं देवः संवृत्त इति ।

राजा । आत्मगतम् । एवमस्मासु निगृह्यमाणेषु[19] सत्कार्यसिद्धिकामः[20] सकामो भवत्वार्यः[21] । प्रकाशम्[22] । शोणोत्तरे[23] अनेन शुष्ककलहेन शिरोवेदना मां बाधते । तत्[24] शयनगृहमादेशय[25] ।

---

१ after निष्क्रान्ता and before आर्य वैहीनरे M adds with Dhruva's E कञ्चु । कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितं प्रकृति सुभगास्त्वेते भावा मदस्य च हेतवो भजति पुरुषा(षो)यैर्मार्गं (? यैरुन्माद) त्व एव सवाङ्कुशाः । राजा । स्व° । एवमेतत् । प्रका° —२ एव om. in P M.—३ स्वकार्याणि K, कार्याणि N B, राज्यं Be L Bi—४ प्रकृतय क्रियन्ताम् B ed I II —५ निरुपपद B, चाण°] चन्द्रगुप्तो N —६ चाणक्य इति M, नार्यश्चाणक्य इति Bi. नार्य इति K —७ इति om in N —८ सत्यमेव om in P M, हन्त सत्यमेव om in Be —९ हतो B M ed I II, संहृतो Be Bi, हतो P, गृहीतोऽधिकार· L, हताधिकार N कृताधिकारः K —१० अत्र] अस्मिन् N M.—११ अवमन्तुम् N, अवगन्तुम् P M, देवो दोषेणाव[om व]न्तुमर्हति K, देव विशेषेणावगन्तुमर्हति B दैवदोषेण Be (by alt.), दैव दोषं Bi, देवदोषम् ed. I, देवदोष. L (om. अथवा° ति).—१२ यन्तुः B—१३ आर्य] आर्य वैहीनरे P, वैहीनरे B—१४ देव om in M.—१५ किंचिदपि Bi—१६ विचारयामि om. in N L.—१७ किं त्वे° यामि om. in L, किंतु] किंच Bi, चिन्तयामि] विचिन्तयामि M, विज्ञापयामि ed. I. II, Be om. किं त्वे° मि and inserts हे —१८ देव एव K, स्वतन्त्रः instead of देवः Bi.—१९ गृह्यमाणेषु N; नियुज्यमानेषु K, Telang's E विगर्ह्यमाणेषु —२० °कार्य°] काम M, स्वयं सिद्धिकाम· P.—२१ भवति P.—२२ N (Telang's E) प्रकाशं। आर्य दीर्घं गच्छ। कञ्चु° । यदाज्ञापयति देव इति निष्क्रान्तः। राजा। शोणोत्तरे etc.—२३ अये शोणोत्तरे Be, आर्ये शोणोत्तरे Bi—२४ तत्] अतः K; om in Bo Bi, यतः N.—२५ गृहमार्गम् M.

**प्रती ।** एदु[1] एदु देवो[2] ।

**राजा ।** आसनादुत्थाय स्वगतम् ।

आर्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमवनेर्विवरं प्रवृत्ता ।
ये सत्यमेव न गुरुं प्रतिमानयन्ति
तेषां कथं नु हृदयं न भिनत्ति लज्जा ॥ ३३ ॥ ८६ ॥

इति निष्क्रान्ताः सर्वे ।

इति तृतीयोऽङ्कः ।

---

१ एदु once only Bo M.—२ देवो] महाराओ K ed. I II —३ अवनेर्] इव भू° L—४ न] हि L ed. III, om in [illegible]—५ गुरु] गुरून् P Bo L B1—६ प्रतिमानयन्ति] अतिपातयन्ति L ed. III, प्रतिपादयन्ति B1—७ न भिनत्ति] प्रभिनत्ति [illegible]—८ कौमुदीमहोत्सवो नाम तृतीयोऽङ्कः P.

ततः प्रविशत्यध्वगवेशः पुरुषः ।

पुरु । ही माणहे ।

जो[3]अणसअं समहिअं को णाम गआगअं करेउ जणे ।

अद्धाण[6]गमणगरुई पहुणो आणा जइ ण होउ ॥ १ ॥ ८७ ॥

तां जाव अमच्चरक्खसस्स ज्जेव[11] गेहं पविसामि[12] । परिश्रान्त[13]वत्परिक्रम्य । एदं भट्टिणो[14] अमच्चरक्खसस्स गेहं[15] । को[16] एत्थ[17] दोवारिआणं[18] । णिवेदेध[19] दाव भट्टिणो अमच्चरक्खसस्स । एसो क्खु करहओ करहओ विअ[22] तुवरन्तो[23] पाडलिउ-त्तादो आअदो[25] त्ति ।

---

१ अध्वगवेष धारी B —२ परिश्रान्तो स्मि B in marg, ही ही माणहे Bo M B1 —३ जोयण° Bo (orig ) B1, जोअणसअसअ विअ M, L has सअणिओओ महिओ instead.—समधिअ K.—४ गआगआइ P, गयागअ Bo (orig)—५ करेउ ] करेउ P (om. जणो); इह करिअ Bo B1, कुणइ B, करेइ M, एइ करेदि L (om जणो)—६ अत्थाण° Bo, अधाण° M —७ गरुई B, गुरुई Bo, गुर्वी K, गुव्वी L, गुवी B1—८ पभुणो L, आण्णा Bo, अण्णा L, आणा ए° P —९ होइ B M B1 —१० B P M B1 om ता —११ ज्जेव] इ N, एद Bo B1 —१२ पविसामि] गच्छिह्मि B, गच्छइ P, गछेमि L, गच्छामि B1 —१३ परिश्रान्तवत् om in M —१४ भत्तुणो P—१५ N K L B1 om एद° गेह, इद M, घर P—१६ को को N K, भोदु को B, भो को ed. II, का ed I, M जाव अमच्चरक्खस पेक्खामि । परिक्रम्य । इद अमच्चरक्खसस्स गेह । जाव पिसामि । प्रविश्य समन्तादवलोक्य । को—१७ एत्थ ] अत्थ B, येथ Bo, येत्थ L B1.—१८ दोआरिणं B, दोआरिआण P दुआरिआण Bo, दोवरिआण M, दुवारिआण L B1 (°ण)—१९ णिवेदेह N K Bo M L, णिवेदेहि B1 —२० दाव] om in M B1, P ता—२१ क्खु Bo B1 om, खु N M—२२ करहको करहको विअ N, करहओ B, करभओ करभो विअ P, लोकयहओ करहओ K, करभओ विय B1, करभओ M L, करहको करहका विअ ed. I, II, करभओ ed. III—V, Vat करभकः तस्य नाम करभो हस्तिशावक इत्यमर, Grah करभकोऽधिकस्त्वरेण । —२३ तुवरन्तो] त(तु)वरको N (after पाडलि°), अधिभदर तुवरतो B, सयन्तो P, तुरंतो Bo, करतुवरन्तो ed I, कज्जं तुवरन्तो ed II—२४ पाडलिपुत्तादो P M B1, पाडलिउत्तादो N, पाडलिपुत्तोदो K, पाडलिपुत्तादो तुवरन्तो आअदो त्ति M —२५ आगदो N L B1.

प्रविश्य दौवारिकः । भद्द भद्द[1] मा[2] उच्चं मन्तेहि । एसो क्खु[3] भट्टा अमच्चरक्खसो कज्ज[4]चिन्ताजणिदेण जाअरेण[5] समुप्पण्ण[6]सीसवेअणो[7] अज्ज वि ण दाव[8] सअणदलं मुञ्चेदि[9] । ता[10] चिट्ठ[11] मुहुत्तअं[12] जाव से[13] लद्धावसरो भविअ[14] भवदो[15] आअमणं[16] णिवेदेमि ।

पुरु । भद्दमुह[17] जधा दे रोअदि[18] ।

ततः प्रविशति शयनगत आसनगतेन[19] शकटदासेन सह सचिन्तो राक्षसः ।

राक्ष । आत्मगतम्[20] ।

मम विमृशतः[21] कार्यारम्भे विधेरविधेयतां
सहजकुटिलां[22] कौटिल्यस्य प्रचिन्तयतो मतिः[23] ।
अपि च विहिते[24] तत्कृत्यानां[25] निकाममुपग्रहे
कथमिदमिहेत्[26]युन्निद्रस्य प्रयान्त्यनिशं निशाः ॥ २ ॥ ८८ ॥

अपि च ।

कार्योपक्षेपमादौ[27] तनुमपि रचयंस्तस्य विस्तारमिच्छन्
बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च ।

---

१ भद्द once only M K P Be.—२ मा] मा मा Be Bi; ण N; भद्द मणिअअ L.—३ खु N M; N om. भट्टा—४ कज्ज ] रज्ज ed I. II; सअडकअ Bi.—५ जागरणेन N; जागरएण Be; जाअरणेण P.—६ समुप्पण्ण ] जणिअ N; समुप्पाइअ M.—७ °वेदणो M; वेयणो Bi—८ ण ताव Be; अज्ज वि दाव सअणअल K; सयणं ण Bi; सअणअलं N; सयणं अलं Be.—९ विमुञ्चदि B; मुञ्चेदि P; मुञ्चदि K; ण मुञ्चइ M.—१० ता om. in B.—११ दाव inserted in B P; ताव ed. I.—१२ मुहुत्तयं Bi.—१३ L om. जाव से; M Bi om. से.—१४ भविअ om. in P M L; भविय Be.—१५ भवदो ] आगमणन्ते N; तुह K (तुहागमणं) Be M L; ते Grah.—१६ आअमणं L—१७ भद्दमुह ] भद्द B.—१८ जधा दे रोअदि ] एव्वं भोदु K; तह N M; तहा होदु Bi; तहा करे(!)मि Be; जधा भणध तधा करेम्हि B.—१९ B om. आसनगतेन; P शयनतलस्थ आसनतलस्थेन श.°—२० M om. आत्मगतम्.—२१ विमृषतः N.—२२ प्रकृतिकुटिलां P M; सहजकुटिलाः K; अपि च कुटिलां Be Bi; मथि च कुटिलां L; कौटल्यस्य Bi.—२३ मतीः K.—२४ अपि च विहिते ] प्रथमविहिते K; अथ च विहिते N Be L ed. I; विहते II.—२५ मत्कृत्यानां Be L; तत् कृत्याना कामपरिग्रहे M; उत्कृत्या° P; अपग्रहे N P.—२६ इतीति P M.—२७ उपक्षेपम् ] अपक्षेपम् M.

कुर्वन् बुद्ध्या विमर्शी प्रसृतमपि पुनः संहरन् कार्यजातं
कर्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा ॥ ३ ॥ ८९ ॥

तदपि नाम दुरात्मा चाणक्यवटुः—

उपसृत्य दौवारिकः । जअदु जअदु—

राक्ष । अभिसंधातुं शक्यः स्यात् ।

दौवा । अमच्चो ।

राक्ष । वामाक्षिस्पन्दं सूचयित्वा आत्मगतम् । चाणक्यवटुर्जयति । अभिसंधातुं शक्यः स्यादमात्य इति । प्रकाशम् । भद्र किमसि वक्तुकामः ।

दौवा । अमच्च एसो कखु करहओ पाडलिउत्तादो आअदो इच्छदि अमच्चं पेक्खिदुं ।

राक्ष । भद्र अविलम्बितं प्रवेशय ।

दौवा । जं अमच्चो आणवेदि । इति निष्क्रम्य पुरुषमुपसृत्य । भद्द एसो अमच्चो चिट्ठदि । उवसप्पेहि णं ।

इति निष्क्रान्तो दौवारिकः ।

---

१ विमर्षी N B P K.—२ प्रसितमिव मुहुः संहरन् K—३ इमम्] इदम् P; अमुम् K.—४ °भवतु Bi —५ उपसृत्य om in M —६ जयदु जयदु N Bo, जेदु M.—७ अभिसंधातुम् P K Bi; अति° N B Bo M L.—८ P om स्यात् —९ सूचयित्वा] अभिनीय K, P K om. आत्मगतं.—१० दुरात्मा चाणक्यवटुः N K Bo M, जयतु Bi N (2).—११ अभिसंधातुम् B P K, अति° N Bo M. L Bi.—१२ N M om. इति. After इति Bo (orig) वामाक्षिस्पन्देन प्रस्तावगतं प्रतिपादयति तथापि नोपमस्त्यान्यः extinguished by sec. h, L वागीश्वरी वामाक्षिस्पन्देन प्रस्तावगता पति(!)मापादयति । तथापि नोपमस्त्यान्यः; Bi इति वाक्यार्धे—१३ P K om भद्र; तत्किमपि P—१४ P om अमच्च.—१५ खु N M, Bo Bi om —१६ करभओ P M, करभको Bi.—१७ पाटलिपुत्तादो M Bi, कुसुमपुरादो करहओ K, Bo om the text from पाडलि° to पेक्खिदुं and writes दुवारिदि (!); L also and has दुआरे चिट्ठदि instead —१८ आगदो N P Bi, B adds दुवारे चिट्ठदि after आअदो—१९ दृच्छइ M—२० पेक्खिउं M.—२१ अविलम्बितम्] क्षिप्रं B, शीघ्रं L, अनन्तरं P, अविचारितम् K; अचिरतरम् M, आर्य किं विचारयसि शीघ्रं प्रवेशय Bo, अचारितम् ed I. H.—२२ ed. I H. ins एवं —२३ N B P om. निष्क्रम्य पुरुषम्] करभकम् N—२४ एसो खु N Bi—२५ चिट्ठइ M—२६ इदो उवसप्पेहि णं N, उवसप्पदु एवं P; ता उवसप्प एवं K; ता उवसप्पेहि Bi.

कर । राक्षसमुपसृत्य । जअदु जअदु अमच्चो ।

राक्ष । नाट्येनावलोक्य । भद्र करभक स्वागतम् । उपविश्यताम् ।

कर । जं अमच्चो आणवेदि । इति भूमावुपविष्टः ।

राक्ष । स्वगतम् । अथ कस्मिन् प्रयोजने मयायं प्रणिधिः प्रहित इति प्रभूतत्वात् प्रयोजनानां न खल्ववधारयामि ।

चिन्तां नाटयति ।

ततः प्रविशति वेत्रपाणिरपरः पुरुषः ।

पुरु । ओशलध अय्या ओशलध । अवेध माणहे अवेध । किं पि पेक्खध ।

दूले पच्चाशत्ती दंशणमवि दुल्लहं अधण्णेहिं ।
कल्लाणमणहलाणं देवाण च भूमिदेवाणं ॥ ४ ॥ ९० ॥

आकाशे । अय्या किं भणाध । किं णिमित्तं एशा ओशालणा कलीअदि त्ति ।

---

१ जेदु M, जयदु २N जअदि २K —२ नाट्येनावलोक्य] दृष्ट्वा M —३ करभ M.— ४ उपविश M —५ P Be M om. अथ — ६ मम] मया N B K Be M, B om अथ — ७ प्रणिधि om in P K Be M B₁ —८ प्रयोजनाना] प्रणिधीना N M, प्रयोजनाना बहुत्वात् Be, प्र° बाहुल्यात् L, कार्याणां प्रकृतीना च K, कार्याणा B₁ —९ न खल्ववधारयामि] नावगच्छामि P —१० इति चिन्ता° K —११ अपर ] द्वितीय N P B Be, om in M — १२ ओसलध P (२)Be, ओसलह N M (°ळ), ओशलह K, बोसलध B₁ —१३ अज्जा all Mss (अ० आ M) —१४ ओसलध P, ओसलह N M (ळ), Be (orig ) om , ओसरेह २ आअदो L—१५ अवेह माणहे अवेह N Be B₁, अवेध माणहे B, अवेह ही माणहे M, अवेह २ माणवा L, P om —१६ ता किं K Be, M om किं —१७ ण] णु P K —१८ पेक्खह N M B₁, B P K Be पेक्खध —१९ दूळे M, दूरे N —२० पच्चासत्ती N P Be B₁—२१ दशणम् B M, दसणम् P B₁, दसनम् N दशन K —२२ अपि B P, अड् N —२३ दु०ळह M — २४ अधणेहिं N, अधण्णेहिं P K Be B₁, अधण्हेहि B, अधण्णाण M *Only Mysore 939 has* अध०जेहिं —२५ कल्लाणमणहराण B P Be (sec h ), क०ळाणमणहराण M, कल्लाण कुलहलाण N Be (sec h ) L ( °कुल ), कण्णाणकुलहराण B₁ —२६ देवाण P B₁, देवाण च om in K, च om in B b Be B₁, देवाण विअ T t n (देआ° ) L (देआ°) —२७ भूमिदेवाण ] Be (*orig omitted*), भूवभूमिदेवाण M, मणुस्सदेआण विअ B L —२८ अज्ज or अज्जा all Mss, M om —२९ B om किं —३० भणाह N Be (orig), भणह Be (sec. h ) M B₁ —३१ B N K Be M *om* एशा, एसा P B₁ —३२ ऊशालणा B, ओसालणा N Be, ओसारणा P, पसालण B₁—३३ करिअदु P, करीयदि B₁

अय्यो एशे क्खु कुमाले मलअकेदू शमुप्पण्णशीशवेअणं अमच्चलक्खशं शुणिअ पेक्खिदुं इदो य्येव्व आअश्चदि । ता एदिणा कालणेण ओशालणा कलीअदि ।
इति निष्क्रान्तः पुरुषः ।

ततः प्रविशति भागुरायणेन सह कञ्चुकिनानुगम्यमानो मलयकेतुः ।

मल । निश्वस्यात्मगतम् । अद्य दशमो मासस्तातस्योपरतस्य न चास्माभिर्वृथापुरुषाभिमानमुद्वहद्भिस्तमुद्दिश्य तोयाञ्जलिरप्यावर्जितः । प्रतिज्ञातमेतत् पुरस्तात् ।

वक्षस्ताडनभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं
हाहेत्युच्चरितार्तनादकरुणं भूरेणुरूक्षालकम् ।
यादृक्तातजनस्य शोकजनितं संप्रत्यवस्थान्तरं
शत्रुस्त्रीषु मया विधाय गुरवे देयो जलस्याञ्जलिः ॥ ५ ॥ ९१ ॥

तत्किं बहुना ।

उद्यच्छता धुरमकापुरुषानुरूपां
गन्तव्यमाजिविहितेन पितुः पथा वा ।

---

१ अज्जा Mss; M om.—२ एशे M, एशो B; एसो N K Be Bi; एस P.—३ N M; P om.—४ कुमाळे M, कुमालो N Be, कुमार॰ K, कुमारो B P Bi.—५ ॰केदु P N; मलयकेदू Bi.—६ शमुप्पणे (!) B, समुप्पण्ण॰ N P K Be M Bi; सीससवेअणं N P K M; सीसवेअणं Be, सीसवेअण Bi.—७ ॰लक्खशं B, ॰लक्खसं M, लक्खसं Be, ॰रक्खसं N P K Bi.—८ सुणिअ P K; om. in N Be Grah, लाणिअ (!) B—९ पेक्खिदुं N B P K Be Bi, पेक्खिदुं M, पेछिदुं b, देक्खिदुं L.—१० य्येव] जेव NBPBi, एव्व M, om. in K.—११ आअश्चदि B only, आअच्छदि N(त) PK, आअच्छइ M, आगच्छअदि Bi, Be corrupted.—१२ ता om. in K Be M, तत एवं [न] कारणेण Grah.—१३ एदिणा] इमिणा N, इदिणा P.—१४ ऊशालणा B, ओशालणा M, ओसालणा N K Bi, ओसारणा P, उस्सारणा Grah.—१५ कलीयदि Be Bi, करीअदित्ति P.—१६ पुरुष॰] निष्क्रा॰ B, पुरुष॰ om. in K, पौरुष N.—१७ मास P, P has अद्य॰ वर्जितः after Verse ५.—१८ तातमुद्दिश्य K.—१९ जलाञ्जलि॰ N.—२० न॰ अप्यावर्जितः] अपि नातिसृष्टः P, अपि न दत्तः M.—२१ अथवा प्रतिज्ञातम् ed. I. II; प्रतिज्ञातश्च B; ॰ज्ञातं च M, प्रतिज्ञा तथा K.—२२ एतत्] एव P.—२३ वक्षस्ताडन] उर K.—२४ तादृक् B P M Bi Grah.—२५ निधाय M Bi.—२६ जलस्य] निवाप Be L ed. I.II.—२७ तत् om. in P Be, किमिह ed. I. II, अतिबहुना N K Bi, अत्र बहुना Be.—२८ उद्यच्छता] उद्गच्छता M.—२९ अका] अतो L.—३० विहितेन] निहतेन N M; निग्रहेन Be, निघ्नेन L ed. III

आच्छिद्य वा स्वजननीजनलोचनेभ्यो
नेयो मया रिपुवधूनयनानि बाष्पः ॥ ६ ॥ ९२ ॥

प्रकाशम्। आर्य जाजले उच्यन्तामस्मद्वचनादनुयायिनो राजानः। एक एवाहममात्यराक्षसस्यातर्कितागमनेन प्रीतिमुत्पादयितुमिच्छामि। अतः कृतमनुगमनक्लेशेनेति।

कञ्चुकी। यदाज्ञापयति कुमारः। परिक्रम्याकाशे। भो भो राजानः कुमारः समाज्ञापयति। न खल्वहं केनचिदनुगन्तव्य इति। विलोक्य सहर्षम्। कुमार एते कुमारस्याज्ञानन्तरमेव प्रतिनिवृत्ताः सर्वे एव राजानः। पश्यतु हि कुमारः।

सोत्सेधैः स्कन्धदेशैः खरकविककशाकर्षणात्यर्थभुग्नैः
अश्वाः कैश्चिन्निरुद्धाः खमिव खुरपुटैः खण्डयन्तः पुरस्तात्।
केचिन्मातङ्गमुख्यैर्विहतजवतया मूकघण्टैर्निवृत्ताः
मर्यादां भूमिपाला जलधय इव ते देव नोल्लङ्घयन्ति ॥ ७ ॥ ९३ ॥

---

१ सुजननी K.—२ रिपुबन्धू° M.—३ उच्यताम् Bi.—४ P M Bi om. वचनाद्.—५ P om. राक्षस.—६ आतर्कितेम K.—७ उत्पादयिष्यामि P; °भीति N.—८ अतः] यतः N; तत् P; ततः Bi.—९ केनचिद् ] केनापि P.—१० अनुगन्तव्य] अनुसर्तव्य M.—११ विलोक्य om. in P.—१२ P K om. कुमार; कुमारकुमार ed. I. II.—१३ खल्वेते Ch.—१४ कुमाराज्ञानन्तरमेव B; कुमारस्याज्ञासमनन्तरमेव KCh; भवदाज्ञा ed. I. II.—१५ B Ch ed. V. om. प्रति.—१६ B om. सर्वे.—१७ P N Be M om. एव.—१८ हि om. in B Ch M Bi; पश्य हि N K.—१९ सोत्सेकैः N; सोत्सेधैः B Be Ch M ed. I—V; सोत्कम्पैः PK; सोत्सवैः Bi; सोत्कम्पाः Vat.—२० स्कन्धदेशैः B P K Be Ch M Grab; कन्धराग्रैः N.—२१ खर] सुखर ed. I. II; खरखर L ed. V; कविक] कारिक B; कशा N P Be M; कुशि alt. to कशि Be; यदा K; कैश्चिदश्वा निरुद्धा स्कन्धदेशैर्लक्षिताश्च। किंभूतैः सोत्सेधैः विश्रितैः (विद्धौ) खरा तीक्ष्णकारिका कविआनीति (?) प्रसिद्धाः। कशा तेजन इति प्रसिद्धा। ताभ्यां यत्कर्षणं आकर्षणेनात्यन्तभुग्नैः Grab.। खरखारिकाया या कशा तस्या आकर्षणात् अत्यन्तं भुग्नैः। सजान (?) इति अस्य प्रसिद्धिः। खरिका वेत्रदण्डे स्यात् कशा स्यादश्वताडनेति धरणिः Vat.—२२ अत्यर्थ] अत्यन्त P—२३ विहत] विगत K Bi; विहित P; विहितं Be.

मल । आर्य जाजले त्वमपि सपरिजनो निवर्तस्व । भागुरायण एवैको मामनुगच्छतु ।

कञ्चु । यदाज्ञापयति कुमारः । इति सपरिजनो निष्क्रान्तः ।

मल । सखे भागुरायण विज्ञापितोऽहमिहागच्छद्भिर्भद्रभटप्रभृतिभिः यथा न वयममात्यराक्षसद्वारेण कुमारमाश्रयामहे । किं तु कुमारस्य सेनापतिं शिखरसेनं द्वारीकृत्य दुष्टामात्यपरिगृहीताच्चन्द्रगुप्तादपरक्ताः कुमारमाभिगामिकगुणयोगादाश्रयणीयमाश्रयामह इति । तन्मया सुचिरमपि विचारयता तेषां[13] वाक्यार्थो[14] नावधारितः ।

भागु । कुमार नैवायं दुर्बोधः । पश्य । विजिगीषुरात्मगुणसंपन्नः प्रियहितद्वारेणाश्रयणीय इति[19] ननु न्याय्यमेवेदम् ।

मल । सखे भागुरायण नन्वस्माकममात्यराक्षसः प्रियतमो हिततमश्च ।

भागु । कुमार एवमेतत् । किं तु अमात्यराक्षसश्चाणक्ये बद्धवैरो

१ K om. आर्य, जाजले] om in K Be M, कञ्चुकिन् B —२ सपरिजनो] ससैनिको B, Be om —३ एव om in K Be B₁—४ विज्ञापितो N, विज्ञप्तो L Bo B₁, इम्] किं P —५ M om इह —६ °द्वारेण न कुमारम् B —७ कुमारमाश्रयणीयम् N B Bo L ed III.—८ M om किं तु —९ द्वारीकृत्य] उरीकृत्य Bo, उररीकृत्य L—१० अपरक्ता ] अपक्रान्ता B, सन्त added by Bo Ch —११ आभिगामिक N B M B₁ K, आभिरामिक P Bo (see b) Ch L, योगात्] योगम् B, युक्त P ed I, योगात् and युक्त altern. ed. II —१२ तस्य मया K Bo M, तत्र B₁—१३ तेषामयं N P K Be —१४ नावधारित ] नाधिगत Ch. ed. I. II, P om न, K Bo M have न before मया —१५ P om. कुमार —१६ नैवायमत्यन्तदुर्बोधार्थं N Ch (°बोधोऽर्थः ) B₁ (om° अत्यन्त), नायमत्यर्थदुर्बोधोऽर्थः K, न दुर्बोधोऽयमर्थः Be —१७ पश्य कुमार P, Bo om पश्य —१८ विजिगीषुरात्मगुणसंपन्नः P ed I II, विजिगीषुमात्मगुणसंपन्नम् N B Ch M L B₁ —१९ आश्रयणीय ] आश्रयणीयमाश्रयन्त इति N B B₁ Ch (N Ch °श्रणी°), आश्रीयते इति P, आश्रयणीयमिति K, M partly corrupted, आश्रयणीयमाश्रयीतेति L —२० न्याय्य एवाय N Ch M B₁, अन्याय्य एवायम् P —२१ K om अस्माकम् —२२ N om अमात्य, M om राक्षस, N राक्षस एव —२३ निर्गत प्रियतमो B₁ —२४ K M om. कुमार —२५ चाणक्यपटौ N, चाणक्येन सह B, चाणक्यवधबद्ध° K.

न चन्द्रगुप्ते। तद्यदि कदाचिच्चन्द्रगुप्तश्चाणक्यमतिजितकाशिनमसहमानः साचिव्यादवरोपयेत् ततो नन्दकुलभक्त्या नन्दान्वय एवायमिति संजातसुहृज्जनापेक्षया चामात्यराक्षसश्चन्द्रगुप्तेन सह संदधीत। चन्द्रगुप्तोऽपि पितृपर्यायागत एवायमित्यङ्गीकुर्यात्। एवं सत्यस्मास्वपि कुमारो न विश्वसेदित्ययमेषां वाक्यार्थः।

मल। युज्यते। अमात्यराक्षसस्य गृहमादेशय।

भागु। इत इतः कुमारः। इति उभौ परिक्रामतः।

भागु। कुमार इदममात्यराक्षसस्य गृहम्। प्रविशतु कुमारः।

मल। एष प्रविशामि। प्रवेशनं नाटयतः।

राक्ष। आं स्मृतम्। प्रकाशम्। भद्र अपि दृष्टस्त्वया कुसुमपुरे वैतालिकः स्तनकलशः।

करभ। अमच्च अध इं।

---

१ B om न चन्द्रगुप्ते; न च Ch, न तु ed. I. II.—२ तद्यदि] स यदि M.—३ अतिजितकाशितया Ch B (°सि°); कदाचित् तद्यदि चाणक्यं चन्द्रगुप्तो अभिजितकाशिताम् P.—४ अवरोहयेत् M, अपरोपयेत् N B P.—५ नन्दकुलस्य K.—६ नन्दान्ववाय. M, नन्दान्वयम् P Be; न[ न्द ]कुलान्वय एवायमिति L, K om एव; इति] इति कृत्वा P ed I II.—७ संजात] संयत B M P, संपद् ed. I II, om. in Bo L, संजातसौहृद. संयत. सुहृज्जनापेक्षया च B₁.—८ सुहृज्जनाकांक्षया B.—९ च] वा P M, B K. om.—१० अमात्यराक्षसो यदि कदाचिच्चन्द्रगुप्त समाश्रयेत् P.—N M om the text from चन्द्रगुप्तो to अङ्गीकुर्यात्.—११ पितृपर्यायागतमिति P, पितृक्रमागतोऽयम् K, पितृक्रमादानतो यमित्यङ्गीकृ (! in marg. इति कृत्वा) B₁, पितृपारम्पर्यागत ed. I II, इति कृत्वा P Ch ed I. III. V.—१२ अङ्गीकुर्यात्] सन्धिमनुमन्येत Ch L B₁ ed I—V.—१३ विश्वसेत्] विश्वस्त स्यादिति B विश्वस्यादिति B₁, अस्मास्वपि कुमारेण (?, orig कुमारेणो; read कुमारे) विस्रम्भ. स्यादिति P.—१४ एषां भद्रभटप्रभृतीनाम् N.—१५ P ins. भागुरायण before अमा°; ed I. II ins. तन्ने भागुरायण.—१६ अमात्यगृहम् B, अमात्यराक्षसगृहम् N M B₁, गृहमार्गम् M.—१७ P Ch om. कुमार.—१८ अमात्यगृहम् K.—१९ तत्प्रविशतु K.—२० स्मृत्वा K Ch B₁; आं स्मृतं N P, आ स्मृतं इत्या B, अये स्मृतं Be L, आत्मगतं। अये स्मृतं ed III, M om. प्रकाश.—२१ स्तनकलशो नाम वै° P.—२२ करभ] पुरुष B P Be, om. in M, अथ कि B₁

मल । सखे भागुरायण कुसुमपुरवृत्तान्तः प्रस्तुतः । तत्तावन्नोपसर्पावः । शृणुवस्तावत् । किं कारणमिति ।

> सत्त्वभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः ।
> अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः ॥ ८ ॥ ९४ ॥

भागु । यदाज्ञापयति कुमारः ।

राक्ष । भद्र अपि तत्कार्यं सिद्धम् ।

कर । अमच्चस्स पसाएण सिद्धम् ।

मल । भागुरायण किं तत्कार्यम् ।

भागु । कुमार गहनः खलु सचिववृत्तान्तः । नैतावता परिच्छेत्तुं शक्यते । अवहितस्तावत् श्रोतुमर्हति कुमारः ।

राक्ष । भद्र विस्तरेण श्रोतुमिच्छामि ।

कर । सुणादु अमच्चो । अत्थि दाव अहं अमच्चेणाणत्तो जधा करहअ कुसुमउरं गच्छिअ मम वअणेण भणिदव्वो तए वेदालिओ थणअलसो जधा

१ मल° । आकर्ण्य Bo M L.—२ °वृत्तान्तो ऽयम् K.—३ प्रस्तुतः ] before कुसुम° P; om. in K Bo; वर्तते Ch. Bo (in marg.), इदानीं प्रवर्तते M, प्रस्तूयते L.—४ तत्तावत् ] तदत्र तावत् K, तेन कथ्यते तत्तावत् P, न तावत् Bo, तत्र तावत् M Bi, न तत्र तावत्° L.—५ उपसर्पामः Be.—६ शृणुमः Be M L.—७ किं कारणमिति °त्रिणः om. in B; किंचित् कारणमेतत् Be, कुतः L, Bi adds पश्य after इति; P adds यतः.—८ सत्त्व°] मन्त्र° ed. I. II सह्य N.—९ राज्ञः P.—१० निभृतार्थेषु B, विधृता° Bi, आलापा हि म° Bi.—११ यथा B.—१२ भद्र om. in N P K.—१३ अमच्च° K, पसाएण N B, °प्पसादेण P, °प्पसाएण K.—१४ सखे भागु° N Cb.—१५ कार्यं सिद्धं N K Ch.—१६ कुमार om. in N P K.—१७ खलु] om. in BK Bo M, किल P.—१८ सचिवस्य B.—१९ Ch K ins. तद् before अवहितः.—२० शृणोतु कुमारः N, अवहितो तावच्छृणुयः B.—२१ भद्र om. in B K M.—२२ कर°] पुरु° P M.—२३ अमच्चो ] अज्जो B P.—२४ अत्थि दाव ] अत्थि णाम P.—२५ जधा ] om. in B, जहा Bo Ch (in marg.) Bi, जह N K M, यथा P, करभक जह N.—२६ करहअ] करभअ B P M; करभक Be N, करभय Bi.—२७ कुसुमपुरं N, कुसुमपुरं P K Bo Bi.—२८ गच्छिअ B P K Ch M, गच्छिय Bi. गच्छअ N, गत्वा Bo L.—२९ मह Bo L ed. III.—३० वअणेण Bi.—३१ भणिअव्वो K; भणिदव्वो B; भण वेआलिअं थ° L.—३२ तए om. in N B P M Bi, तुए ed. I. II.—३३ वेआलिओ B P Bo Bi.—३४ थअलसो B Bi.—३५ जहा Be Bi, जह K M.

चाणक्कहदएण[1] तेसुं[2] तेसुं आणाभङ्गेसुं[3] अणुचिट्ठीअमाणेसुं[4] चन्दउत्तो तए[5] समुत्ते-[6]अणसमत्थेहिं सिलोएहिं उवसिलोअइदव्वो[7] त्ति ।

राक्ष । भद्र[8] ततस्ततः ।

कर[9] । तदो मए पाडलिउत्तं[10] गच्छिअ[11] सुणाविदो[12] अमच्चसंदेसं[13] थणअलसो[14] ।

राक्ष । भद्र[15] ततस्ततः ।

कर[16] । एत्थन्तरे[17] णन्दकुलविणासदूसिदस्स[18][19] पोरजणस्स[20] परिदोसं[21] उप्पादअन्तेण[22] चन्दउत्तेण[23] आघोसिदो[24] कुसुमउरे[25] कोमुदीमहूसवो[26] । सो अ[27] चिरआल-[28]

१ हवकेण P—२ तेसुतेसु N h Ch L M (के ?), तेसु Be—३ अणा° Ch, अण्णा° L B₁ °भङ्गेसु N K M B₁—४ अणुचिट्ठीअमाणेसु N K, अणुचिट्ठिअमाणेसु P Ch, अणुचिट्ठिअमाणेसु Be—५ तए B K Be M om, तुए B₁—६ समुत्तेअण] उत्तेअण Ch M, om in K, समुत्तेयण° B₁—७ उवसिलोइदव्वो M B₁, उअसिलोइदव्वो B P, उवसिला(?)इअवव्वो Be, समुत्ते इदव्वो K—८ भद्र om in P M—९ कर°] पुरु° P M—१० पाडलिपुत्त M, पाडलिपुत्तअ P—११ गदुअ B only, ed. III, गच्छिअ N P K Be Ch B₁, M om गच्—१२ सुणाविओ Be M, सुणाइदो Ch—१३ अमचस्स Be Ch M, अमच्चरक्खसस्स P, सदेसो B ed. I II—१४ वेआलिओ थणअलसो B Be Ch (वे)° L, °कलसो P—१५ भद्र om in M, the whole line om in B Be L B₁—१६ कर°] पुरु PM—१७ अ थन्तरे Be, एत्थ अन्तरे M, एत्थन्तले N—१८ णन्दउल Be Ch M (°च्च)—१९ दुक्खिदस्स B K, °यस्स Be, दुक्खिअस्स M N (दू), दुस्सिदस्स P, दुस्सिअस्स Ch L, °दूमिअस M, दूमियस्स B₁, दुम्मणस्स ed I II, दूणस्स ed III V—२० पोरभणस्स K, पोरअणस M, पौरअणस्स B, पौरजणस्स b Be Ch L B₁, पउरजणस्स P, पौलजणस्स N—२१ परिदोस P Be, परितोस M B₁, परिओस B K Ch, पलिओसम् N, सन्तोस b—२२ समुप्पादअन्तेण B L, समुप्पाअयतेण Be, समुप्पाअन्तेण ed I II, उप्पादयन्तेण K, उप्पादअन्तो P—२३ चन्दउत्तहदएण B₁—२४ आघोसिदो चन्दउत्तेण P, आघोसिओ N B Be M, आहोसिदो Ch—२५ कुसुमउरे om in B P, कुसुमउले N, कुसुमपुर° B₁—२६ कौमुदी° N B P Be Ch L, कोमुदी K M, cf Hem I. 159, महुसवो h, महोस्सओ N, महोसओ B—२७ B om सो अ, B₁ om अ, सो वि K—२८ चिर° N, चिरआए B, चिरकालेन Grah

पवत्तणजणिदपरिदोसो[3] अहिमदबन्धुअणसमागमो विअ संसिणेहं बहुमाणिदो णाअरअणेण ।

राक्ष । सबाष्पम् । हा देव नन्द ।

कौमुदी कुमुदानन्दे जगदानन्दहेतुना ।
कीदृशी सति चन्द्रेऽपि नृपचन्द्र त्वया विना ॥ ९ ॥ ९५ ॥

भद्र ततस्ततः ।

कर । अमच्च तदो सो लोअणाणन्दभूदो अणिच्छन्तस्स जेव्व णाअरअणस्स णिवारिदो चाणक्कहदएण कोमुदीमहूसवो । एत्थन्तरे थणअलसेण पउत्तो चन्दउत्तसमुत्तेअणसमत्था सिलोअपरिवाडी ।

राक्ष । सहर्षम् । साधु सखे स्तनकलश साधु । काले भेदबीजमुप्तमवश्यं फलमुपदर्शयति । कुतः ।

---

१ पउत्तमाणो B; पउत्तमाण° P, पउत्तण° N, पवत्तमाण° ed. I. II; प्रवर्तमानो (v. l. °प्रवृत्त) Grah, परिवर्तमाण° Ch (alt. to पवट्टमाण°); परिवट्टमाण° Be, °णो L ed. III. पवष्माण Bi; I propose to read पवत्तण° (=प्रवर्तनेन).—२ °जणिअ° N M; °जणिओ P.—३ परिओसो B P Ch, पविओसो K, पडिओसो N, परिचओ M L Be (°प°) ed. III. V—४ अभिमद B P Be L Bi, अभिणव M—५ °बधू° N L, °अण° M om.; °यण° Be, °अणदस K, °जण° Bi; °समाअमो M—६ विअ] वि P; विय Be.—७ ससिणेह° K, ससिणिहं N.—८ °माणिदो B P, °माण्णदो N, °माणिदो b Be, °माणिदो K Bi, °माणिओ M L.—९ णाअरजणेण N, णाअरअणेण B, णाअरजणेण P L Bi; णायर° Be, णअरजणेण K Ch M.—१० om. in Be—११ लोअण] सव्वलोअण B, सर्वलोचन Grah, लोअलोअणा° ed I. II.—१२ भूदो] भूओ Be, हेदू M.—१३ जेव्व Be एव्व M, जोव्व (not distinctly written, ? जेव्व) Be.—१४ णाअर° N, णअर° K Ch M, °जणस्स N Ch Be M K (om स) Bi—१५ तहा णिवारिदो N, वारिओ M.—१६ चाणक्कहदएण Bi N—१७ कोमुदीमहूसवो om. in K Be Ch M, कौमुदीमहूसओ N, कोमु[दी]महूसओ B, कौमुदीमहूसवो P.—१८ एत्थन्तले N, एत्थ° Be, एत्थ अन्तरे M.—१९ थण° Be (sec. h).—२० पउत्ता] पउत्तो B (त्तो) P, पट्टिदा N, पवट्टिदा (after पाडी) L, प्रवर्तिता Grah.—२१ चन्दउत्तस्स Ch M K (चन्द°).—२२ समुत्तेयण° Be Bi; सम् om. in M.—२३ परिपाली P; पडिवाडी Ch, पडि° N, L adds स° । कीदृशी सा पुनः श्लोकेत्यादि पूर्वोक्तं पठति.—२४ P om. साधु bef. सखे; काले] om. in P; स्थाने M; काले खलु B, K om. अवश्यं.—२५ उप om. in P; उपदर्शयिष्यति K Ch Bi ed I. II.—२६ कुतः om. in M.

सद्यः क्रीडारसच्छेदं प्राकृतोऽपि न मर्षयेत् ।
किंनु लोकाधिकं धाम बिभ्राणाः पृथिवीभुजः ॥ १० ॥ ९६ ॥

मल । एवमेतत् । सद्यः क्रीडारसच्छेदमित्यादि पठति ।

राक्ष । भद्र ततस्ततः ।

करभ । तदो चन्दउत्तेण आणाभङ्गकलुसिदहिअएण सुइरं अमच्चगुणं पसंसिअ णिब्भच्छिदो अहिआरादो चाणक्कहदओ ।

मल । सखे भागुरायण गुणप्रशंसया दर्शितश्चन्द्रगुप्तेन राक्षसे भक्तिपक्षपातः ।

भागु । कुमार न तथा गुणप्रशंसया यथा चाणक्यवटोर्निराकरणेन ।

राक्ष । भद्र किमयमेवैकः कौमुदीमहोत्सवप्रतिषेधश्चन्द्रगुप्तस्य चाणक्यं प्रति कोपकारणमुतान्यदप्यस्ति ।

मल । सखे भागुरायण चन्द्रगुप्तस्य कोपकारणान्वेषणे किं फलमेष पश्यति ।

भागु । कुमार एतत् फलं पश्यति । मतिमांश्चाणक्यस्तुच्छे प्रयोजने किमिति चन्द्रगुप्तं कोपयिष्यति । न चैवं कृतवेदी चन्द्रगुप्त एतावता गौरव-

मुद्धयिष्यति[1] । सर्वथा[2] चाणक्यचन्द्रगुप्तयोः पुष्कलात्[3]कारणाद्यो विश्लेष उत्पद्यते[4] स आत्यन्तिको[5] भवतीति ।

कर[6] । अमच्च अत्थि अण्णाइं[7] पि चन्दउत्तस्स कोव[8]कारणाइं चाणक्के[9] । उवेक्खिदो अणेण[10] अवक्कमन्तो[11] कुमारो[12] मलअकेदू अमच्चरक्खसो अ[13] ।

राक्ष । सहर्षम् । सखे[14] शकटदास हस्ततल[15]गतो मे संप्रति[16] चन्द्रगुप्तो भविष्यति । इदानीं[17] चन्दनदासस्य बन्धना[18]न्मोक्ष[19]स्तव च पुत्रदारैर्[20] सह[21] समागमः[22] ।

मल । सखे भागुरायण हस्ततल[23]गतो मे संप्रति चन्द्रगुप्त[24] इति व्याहरतः[25] कोऽयम[26]स्याभिप्रायः ।

---

१ चाणक्यगौरवम् P K B1; ड्लघयति B B1, स्कुयिष्यति K —२ न सर्वथा K —३ शुष्ककलहात् B, पुष्कलात् कारणात् N (°स्प°) P Bo M B1 L ed I II, अपुष्कलात् K, पुष्कलापराधकरणात् Ch —४ उत्पद्येत L—५ न स आत्यन्तिको K, स न B, all other Mss reading पुष्कलात् om न—६ कर] गुरु P, अत्थि पुत्थि N, अत्थि दाव B, M om. अत्थि —७ अण्णाइस्सि N P (इ) K, अण्णस्सि B, अणाइं वि Bo, अणाइ पि Ch, अण्णं वि L अन्यदपि कोपकारणं Grab —८ कोप Ch, कोह K—कारणाइम् N, कारणे B, कारणाणि Bo, कारणाइ Ch, चाणक्के कोवआरइणाइं M, °कारणं L—९ after चाणक्के (om in N K) ed I II insert राक्ष° । किंकि कर° । जधा पढमं दाव —१० अणेण] णेण K M L, om in N —११ अवक्कन्तो B Ch B1, णिक्कमन्तो P, अदिक्कमन्तो K —१२ कुमारो om in Be M कुमार° K, कुमालो N, मलअकेदू अदिक्कन्तो अमच्चरक्खसो त्ति P, मलयकेदू K, °लक्खसो N —१३ अ] त्ति P Be, अ त्ति N M—१४ सखे] om in K Be, वयस्य M, हन्त P—१५ B P K M om. तल —१६ Be M om संप्रति, भविष्यति संप्रति चन्द्रगुप्त K, चन्द्रगुप्त इति भ° P, भविष्यतीति Ch —१७ B (alone of all Mss ) ins. शकटदास and assigns the speech beginning with इदानीं to Sakatadāsa, thus also in ed I II V, while N b P K Be Ch M B1 om it, Ch om इदानीं—१८ बन्धनात् om in K, बन्धन° P—१९ तवापि B, च om in K—२० पुत्रदारैः K Bo Ch, पुत्रादिदारैः P, पुत्रकलत्रै B, पुत्रकलत्रेण B1—२१ सह P om —२२ समागम ] सङ्गमः N; संयोग K, B Ch B1 add after it जीवसिद्धिप्रभृतीनां क्लेशच्छेद ; भाग । स्वगतं । जातः सत्यं जीवसिद्ध्यादीनां (°प्रभृतीनां B1) क्लेशच्छेदः —२३ तल om. in B P K M; संप्रति om in P K Bo Ch M —२४ चन्द्रगुप्तो भविष्यतीति Ch —२५ व्याहरतः P —२६ अयम् om. in N B K Be M B1

भागु । कुमार[1] किमन्यत् । चाणक्यादपकृष्टस्य[2] चन्द्रगुप्तस्योद्धरणे[3] सौकर्यम[4]वश्यं[5] पश्यति ।

राक्ष । भद्र[6] हृताधिकारः[7] क सांप्रतम[8]सौ वटुः ।

कर । अमच्च[9] तहिं जेव्व[10] पाडलिउत्ते[11] पडिवसदि[12] ।

राक्ष । सावेगम् । किं[13] तत्रैव प्रति[14]वसति । न तपोवनं गतः । प्रतिज्ञां वा[15] न पुनः[16] समा[17]रूढवान् ।

कर । अमच्च[18] तवोवणं[19] गमिस्सदि[20] त्ति सुणीअदि[21] ।

राक्ष । सावेगम्[22] । सखे[23] शकटदास नेदम्[24]उपपद्यते । पश्य ।

देवस्य येन पृथिवीतलवासवस्य
साग्रासना[25]पनयजा[26] निकृतिर्न सोढा ।
सोऽयं[27] स्वयंकृतनराधिपते[28]र्मनस्वी
मौर्यात्कथं नु[29] परिभूतिमिमां सहेत ॥ ११ ॥ ९७ ॥

मल । सखे भागुरायण चाणक्यस्य[30] तपोवनगमने पुनः[31]प्रतिज्ञारोहणे[32] वा[33] कास्य स्वार्थसिद्धिः[34] ।

---

१ कुमार om in P K Be M.—२ अस्य चाणक्यादपकृष्टस्य B, अवकृष्टस्य K, अपभ्रष्टस्य M—३ उद्धरणे चन्द्रगुप्तस्य M—४ सौकर्यम्] कार्यं B, सौकार्यं ed I H, उद्धारणाय किंचित्कार्यम् Be L, K om अवश्य—५ अवगच्छति ed. I H.—६ अथ ins. after भद्र in N B Ch M Bi, कथय K—७ हृताधिकार P Ch, हृतो °धि° M—८ साम्प्रतं क Be Ch, K om असौ—९ अमच्च om in B P K—१० जेव N B P K, जेव Be, एव °व M एव्व L—११ पाडलिपुत्ते M—१२ परिवसइ M, पडिवसदि Be, णिवसदि B K, अहिवसदि L, परिवसति Bi—१३ अद्य किं N Be Bi, तत्रैव किं B Ch, किं om. in P Be—१४ वसति P—१५ वा om in N B Be—१६ न पुन om in M, पुनर्न Be.—१७ सम् K om—१८ अमच्च] अज्ज B—१९ तओवन Ch.—२० गच्छिअदि P, गच्छइ M, गछदि Bi—२१ सुणीअदि] सुणिअ P, सुणीयदि Bi, श्रूयते Grah., after सुणीअदि N ins° एव, B क्खु एद, P क्खु एव—२२ M om. सावेग—२३ सखे om. in P Bi—२४ नेदम्] नैतद् P, नेदानीमिदम् M.—२५ स्वाग्रासन° N L—२६ अपतयनात् K, अपनयजाद्विकृति M—२७ सोऽपि Be—२८ नयाधिपते· B—२९ नु परि°] स्वपरि P.—३० चाणक्यहतकस्य Ch, तपोवनगमने चाणक्यहतकस्य K.—३१ om in M—३२ रोपणे P, °समारोहणे M—३३ वा] च N.—३४ कार्यसिद्धि H, वास्य को हेतु K.

भागु । कुमारं नायमत्यन्तदुर्बोधोऽर्थः । यावद्यावच्चाणक्यो निरपेक्षश्चन्द्रगुप्ताद् दूरीभवति तावत्तावदस्य स्वार्थसिद्धिः ।

शाक । अमात्यं अलमन्यथासंभावितेन । उपपद्यत एवैतत् । पश्यत्वमात्यः ।

राज्ञां चूडामणीन्दुद्युतिखचितशिखे मूर्ध्नि विन्यस्तपादः
स्वैरेवोत्पाद्यमानं किमिति विषहते मौर्य आज्ञाविघातम् ।
कौटिल्यः कोपितोऽपि स्वयमभिचरणे ज्ञातदुःखप्रतिज्ञो
दैवात् पूर्णप्रतिज्ञः पुनरपि न करोत्यायतिज्यानिभीतः ॥१२॥९८॥

राक्ष । शकटदास एवमेतत् । तद्गच्छ विश्रामय करभकम् ।

शाक । यदाज्ञापयत्यमात्यः । इति करभकेण सह निष्क्रान्तः ।

राक्ष । अहमपि कुमारं द्रष्टुमिच्छामि ।

मंल । अहमेवार्यं द्रष्टुमागतः ।

राक्ष । नाट्येनावलोक्य । अये कुमारः । आसनादुत्थाय । इदमासनम् । उपवेष्टुमर्हति कुमारः ।

---

१ कुमार P Bo om —२ न दुर्बोधोऽयमर्थं K, नायमत्यन्तो दुर्बोधार्थं P, Be om अयम्; M om अर्थं, नात्यन्तदुर्योधोऽयमर्थं B₁ —३ यावत् तावत् once only B P —४ चाणक्यहतक P K Be, चाणक्यहतको [निरपेक्ष in marg ] श्चन्द्रगुप्ताद् Ch, चन्द्रगुप्तश्चाणक्यात् M,—५ निरपेक्ष om 10 B P K M Ch ( orig ) L —६ तावदेवास्य कार्यसिद्धि B, अस्य] तस्य P —७ अमात्य om in N, अलममात्य M —८ आत्यन्तिकाविकल्पेन P, अन्यथाविकल्पेन B L, °विकल्पितेन K M B₁ °विकल्पै Ch, अत्यन्तविकाल्पितेन ed I II, अन्यथा विकल्प्य ed. III —९ एतदुपपद्यत एव Ch, N K om एतद् —१० कुत । पश्यतु P B ed I. II, N K om कुत —११ चूडामणीनाम् द्युति° B —१२ कोपतो B K Be Ch M L B₁ —१३ अतिचरणे ed I. II —१४ ज्ञातदु:ख B Be, दृष्टदु:ख N, दृष्टदोष M B₁, ज्ञातदु:खप्रतिज्ञो L —१५ तीर्णे M —१६ त्यानिभीत्या P M L Ch, पुनरपि न घरेत् पापमित्याजिभीरु Dhruva's S —१७ N P M om. तद् —१८ विश्वासय P —१९ अमात्य om in N B —२० मल । उपेत्य । अहम् M, एव ]अपि N P, उपागत Be—२१ नाट्येनावलोक्य] दृष्ट्वा M —२२ अथ कुमार एवागत Ch, कुमार आगत. आगत B, अये कुमार एवागत B₁, —२३ अत्रोपवेष्टुम् K, आरोढुम् Ch

मल । अयमुपविशामि । उपविशत्वार्यः । इति यथासनमुपविष्टौ ।

मल । आर्य अपि सह्या शिरोवेदना ।

राक्ष । कुमारस्याधिराजशब्देनातिरस्कृते कुमारशब्दे कुतः शिरोवेदनायाः सह्यता ।

मल । उरीकृतमेतदार्येण न दुष्प्रापं भविष्यति । तत्कियन्तं कालमस्माभिरेवं संभृतबलैरपि शत्रुव्यसनमवेक्षमाणैरुदासितव्यम् ।

राक्ष । कुमार कुतोऽद्यापि कालहरणस्यावकाशः । प्रतिष्ठस्व विजयाय ।

मल । आर्य अपि शत्रोर्व्यसनमुपलब्धम् ।

राक्ष । कुमार बाढमुपलब्धम् ।

मल । कीदृशम् ।

राक्ष । सचिवव्यसनम् । किमन्यत् । अपकृष्टश्चाणक्याच्चन्द्रगुप्तः ।

मल । आर्य सचिवव्यसनमव्यसनमेव ।

राक्ष । कुमार अन्येषां भूमिपालानां कदाचिदमात्यव्यसनमव्यसनं स्यात् न पुनश्चन्द्रगुप्तस्य ।

मल । ननु विशेषतश्चन्द्रगुप्तस्य ।

---

१ अयमहम् B Ch —२ अमात्य B Ch —३ आर्य om in M —४ कुमार कुमारस्य Be कुमार ननु कुमारस्य Ch, अधिराजशब्देनाप्यतिरस्कृते B1 —५ कुमारशब्दे] युवराजशब्दे M —६ उरीकृतम्] उररीकृतम् B Ch L ऊरीकृतम् M आर्य अङ्गीकृतम् N —७ अमात्येन Ch —८ न नो P —९ °प्य N दु खप्राप्य M, दु प्राप B1, मल। आर्य तव नीतिमत सुनजेन दीरियाश्च भविष्यति K —१० एव M —११ सम्भृतसज्जैरस्माभिरपि P —१२ अपेक्षमाणै P, उदीक्षमाणै Be ed. III, प्रतीक्षमाणै M —१३ कुमार om in P K M —१४ रिपु विजयाय P —१५ आर्य om in P, अमात्य K —१६ अपि om in Bc अपि किंचित् ed I II —१७ शत्रोर्व्यसनमुपलब्धम् B —१८ बाढम् K Be M om, गाढम् ed I II —१९ कीदृश तत् M L —२० अपहृत K —२१ आर्य] अमात्य Ch —२२ सचिवव्यसनमेव K B1 (om अव्यसनम्) —२३ कुमार om in B P K Be M —२४ भूपतीना K Ch L, भूपाना I भूमिपतीना Bc —२५ कदाचिदमात्य°] सचिव° K, after अव्यसनम् K ins एव —२६ पुन ] तु M B1 —N om न पुनश्चन्द्रगुप्तस्य —२७ आर्य ins in L Ch ed I II —२८ ननु] Ch om, न पुन Ch K —२९ चन्द्रगुप्तस्येति N K Be

राक्ष[1] । किं कारणम् ।[2]

मल । चन्द्रगुप्तप्रकृतीनां हि[3] चाणक्यदोषा एवापरागहेतवः । तस्मिंश्च[4] निराकृते प्रथममपि[5] चन्द्रगुप्तमनुरक्ताः[6] प्रकृतयः संप्रति[7] सुतरामेव तत्र[8]ानुरागं दर्शयिष्यन्ति[9] ।

राक्ष । कुमार[10] नैतदेवम् । ताः खलु[11] द्विप्रकाराः प्रकृतयश्चन्द्रगुप्तसहोत्थायिन्यो[12] नन्दकुलानुरक्ताश्च[13] । तत्र[14] चन्द्रगुप्तसहोत्थायिनीनां[15] चाणक्यदोषा एव[16] विरागहेतवो[17] न नन्दकुलानुरक्तानाम्[18] । तास्तु खलु[19] नन्दकुलमनेन[20] पितृकुलभूतं कृत्स्नं[21] कृतघ्नेन घातितमित्यपरागा[22]मर्षाभ्यां विप्रकृताः सत्यः[23] स्वाश्रय[24]मलभमानाश्चन्द्रगुप्तमेवा[25]नुवर्तन्ते[26] । त्वादृशं[27] पुनः[28] प्रतिपक्षोद्धरणे[29] संभाव्य[30]शक्तिमभियोक्तारमासाद्य[31] क्षिप्रमेनं[32] परित्यज्य[33] त्वामेवा[34]श्रयन्ते[35] इति । अत्र कुमारस्य[36] वयमेव निदर्शनम् ।

मल । अमात्य[37] किमेतदेवैकं[38] सचिवव्यसनमभियोगकारणं चन्द्रगुप्तस्य[39] । आहो स्विदन्यदप्यस्ति[40] ।

---

१ N K L M om राक्ष (and consequently मल next line), किं कारणमिति B, किं कारणमिति चेत् M, अथान्यसने किं का° B1 —२ इदं कारणम् P —३ हि P K Be M om —४ तस्मिंस्तु P, तस्मि M, चन्द्रगुप्तनिराकृते Ch —५ प्रथममेव P, पूर्वमपि K —६ चन्द्रगुप्ते L —७ संप्रति] P om, तु after it in N K, इदानीं पुनः Ch ed I II —८ तत्र] अत्र P, तस्मिन् K —९ प्रदर्शयिष्यन्ति K —१० कुमार नैतदेवम् Be om, मा मैव L —११ ताः खलु] इह P ed I II —१२ उत्थायिनो P M —१३ नन्दकुलमनुरक्ताश्च N, नन्दकुलमनुगताश्च M —१४ K om तत्र —१५ °उत्थायिनां H P M, °उत्थायिनीनां प्रकृतीनां B1 Ch (sec h.) ed. I II —१६ एव P K M B1 om —१७ विराग] अपराग° B K Ch —१८ नन्दकुलानुरक्तानां च नैतत् B, °कुलमनुरक्तानां N M, °कुलानुगतानां K Be —१९ P K M om खलु —२० B om अनेन —२१ L om कृत्स्नं कृतघ्नेन; Be B1 om कृत्स्नं, K स्वेदं instead of कृत्स्नं —२२ विराग° K —२३ सत्य ] om in Be, च B, सद्य B1 Ch (sec h) —२४ B विप्रकृताश्चाश्रयम्; K om स्व —२५ P om एव —२६ अनुवर्तन्ते] आश्रयन्ते K —२७ तादृशम् M —२८ तु पुनः N B K —२९ स्वप्रतिपक्ष° M, विपक्ष° K, °उद्धरण° K Ch —३० संभावित° [illegible] K Ch —३१ आसाद्य ] समासाद्य Ch, प्रतिपद्य K —३२ क्षिप्रमेव तम् N M B1 —३३ त्यक्त्वा K —३४ N M om त्वामेव —३५ श्रयन्ते N, आश्रयिष्यन्त इति P L —३६ Be M om कुमारस्य, निदर्शनं वयमेव N B Be B1 —३७ अमात्य] आर्य N [illegible] B Be B1, om in M —३८ एकमेव N L —३९ P K M om. चन्द्रगुप्तस्य.—४० अहो स्विदन्यद् ] उतान्यदपि P K, अहोऽन्यदपि किंचित् L, P om. अस्ति.

राक्ष । कुमार किमन्यैर्बहुभिरपि । एतद्धि तत्र प्रधानतमम् ।

मल । आर्य तत्कथं प्रधानतमं नाम । किमिदानीं चन्द्रगुप्तः स्वराज्यकार्यधुरामन्यत्र मन्त्रिण्यात्मनि वा समासज्य स्वयं प्रतिविधातुमसमर्थः ।

राक्ष । बाढमसमर्थः ।

मल । किं कारणम् ।

राक्ष । स्वायत्तसिद्धिषूभयायत्तसिद्धिषु वा भूमिपालेष्वेतत् संभवति । चन्द्रगुप्तस्तु दुरात्मा नित्यं सचिवायत्तसिद्धावेवावस्थितश्चक्षुर्विकल इवाप्रत्यक्षसर्वलोकव्यवहारः कथमिव स्वयं प्रतिविधातुं समर्थः स्यात् । कुतः ।

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥ १३ ॥ ९९ ॥

अपि च ।

नृपोऽपकृष्टः सचिवात्तदर्पणः स्तनंधयोऽत्यन्तशिशुः स्तनादिव ।
अदृष्टलोकव्यवहारमूढधीर्मुहूर्तमप्युत्सहते न वर्तितुम् ॥ १४ ॥ १०० ॥

मल । आत्मगतम् । दिष्ट्या न सचिवायत्तसिद्धिरस्मि । प्रकाशम् । आर्य

---

१ कुमार om. in B P K M L.—२ सुबहुभिः K Ch; L om. किम्° अपि; P om. अपि.—३ M om. तत्र; अत्र एतद्धि तत्र B; L has साचिव्यसनमेव प्रधानतमं व्यसनं.—४ आर्य] अमात्य K Ch; P om.—५ तत् om. in Be K M Bi; तत्कथं om. in Ch; कथं तर्हि P; कथमिव L.—६ राज्य om. in K M L; °कार्यराज्य N Be; °राज्यकर्म° P.—७ °धुरम् N K M L Bi.—८ अन्यमन्त्रिणि B P; K M om. आत्मनिवा.—९ स्वयं वा M.—१० किंकारणमिति K N Be; M om. this line.—११ वा Be om.; भूपालेषु तत् K Be Bi; L om. उभया° पालेषु.—१२ संभवति न चन्द्रगुप्ते B K Ch.—१३ दुरात्मा om. in P M.—१४ नित्यम्] सर्वथैव M.—१५ अमात्यायत्त° P, °सिद्धिः b M as proposed by Dhruva ed. V; °सिद्धावयवस्थितिः (sec. h. तः) B; व्यवस्थितः Telang's E Bi; N P Bi om. एव; Ch L om. अव; उपस्थितः P.—१६ अप्रत्यक्ष°] अदृष्टलोकप्रत्यक्षव्यवहारः K; अदृष्टप्रत्यक्षलोकव्यवहारः Ch.—१७ °सर्व° om. in Be M Bi; संव्यवहारः N Be M.—१८ कथमिव स्वयम्] स्वयम् न N; कथमिव न स्वयम् B—१९ प्रतिविधानानां समर्थः N; प्रतिविधानसमर्थः Be—२० समर्थः] शक्यः P.—२१ verse १३ om. in N b Be M; v. १३ after v. १४ K Ch.—२२ अतदर्पणः] सदर्पणः B P K Be Ch M Bi—२३ मूढ] मन्द L.—२४ °आयत्ततन्त्रोऽस्मि K Be Ch Bi.—२५ आर्य om. in K Be; अमात्य Ch.

यद्येवं तथापि खलु बहुष्वभियोगकारणेषु सत्सु सचिवव्यसनमभियुञ्जानस्य शत्रुमभियोक्तुरैकान्तिकी सिद्धिर्भवति ।

राक्ष । ऐकान्तिकीमेवं सिद्धिमवगन्तुमर्हति कुमारः । कुतः ।

त्वय्युत्कृष्टबलेऽभियोक्तरि नृपे नन्दानुरक्ते पुरे
चाणक्ये चलिताधिकारविमुखे मौर्ये नवे राजनि ।
स्वाधीने मयि— । इत्यर्धोक्ते लज्जां नाटयन् ।
—मार्गमात्रकथनव्यापारयोगोद्यमे
त्वद्वाञ्छान्तरितानि संप्रति विभो तिष्ठन्ति साध्यानि नः ॥१५॥१०१॥

मल । अमात्य यद्येवमभियोगकालमार्यः पश्यति तत्किमास्यते । पश्य ।

उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममलिमुखरैः कल्लोलमुखरम् ।
स्रोतःखातावसीदत्तटमुरुदशनैरुत्सादिततटाः
शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः ॥१६॥१०२॥

अपि च ।

गम्भीरगर्जितरवाः स्वमदाम्बुमिश्रम्
आसारवर्षमिव शीकरमुद्गिरन्त्यः ।

---

१ यद्यप्येवं K L H Bo.—२ M om. तथापि खलु P om. खलु.—३ सत्स्वपि Bi.—४ सचिवव्यसनम्] व्यसनिनम् Bo M; सचिवव्यसनिनम् Bi.—५ M om. अभियुञ्जानस्य.—६ अभियोक्तुः] अभियोद्धुः Be.—७ तु om. in K Bo M.—८ M om. भवति; भविष्यति K.—९ राक्ष । ऐकान्तिकी एव सिद्धिर्भवति । राक्ष । ऐकान्तिकीमेव Ch.—१० N om. एव.—११ अभि° D.—१२ उत्तिष्ठबले K.—१३ नन्दापरक्ते K, पुरे] जने P.—१४ मयि कृत्य इत्यर्धोक्ते M.—१५ वाचान्तरितानि K Bi.—१६ om. in P K Bo Ch M, आर्य N.—१७ अभियोगकारणम् K.—१८ आर्यः] अमात्यः K Ch ed. L H.—१९ तत्] ततः B Be.—२० पश्य] संप्रति हि B; om. in P Bo M Bi.—२१ प्रस्यन्दिसलिलम्] प्रस्यन्दितोयम् P.—२२ °कण्ठं द्रुतमतिमुखराः N; अतिमुखराः N L; अलि° P; अलि° K B Ch M.—२३ वारिकल्लोलमुखम् P.—२४ दशनैर्दारितानन्तटान्ताः P; दशनैः] वदनैः L.—२५ गजपतयोऽद्य प्रयान्तिः पूर्वैः P; गजपतयोऽद्य पास्यन्त्यसंख्याः Ch; पश्यन्तु K.

विन्ध्यं विकीर्णसलिला इव मेघमाला
रोत्स्यन्ति वारणघटा नगरं मदीयाः ॥ १७ ॥ १०२ ॥

इति भागुरायणेन सह निष्क्रान्तो मलयकेतुः ।

राक्ष । कः कोऽत्र भोः ।

प्रविश्य पुरुषः । आणवेदु अमच्चो ।

राक्ष । प्रियंवदक ज्ञायतां सांवत्सरिकाणां द्वारि कस्तिष्ठति ।

प्रियं॰ । जं अमच्चो आणवेदि । इति निष्क्रम्य पुनः प्रविश्य । अमच्च एसो क्खु संवच्छरिओ खवणओ—

राक्ष । आत्मगतम् । अनिमित्तं सूचयित्वा । कथम् । प्रथममेव क्षपणकः ।

प्रियं । जीवसिद्धी ।

राक्ष । प्रकाशम् । भद्र अबीभत्सदर्शनं कृत्वा प्रवेशय ।

प्रियं । जं अमच्चो आणवेदि । इति निष्क्रान्तः ।

ततः प्रविशति क्षपणकः ।

शासणमलिहन्ताणं पडिवय्यध मोहवाधिवेय्याणं ।
ये पढममेत्तकडुअं पश्चा पथ्थं उवदिशन्ति ॥ १८ ॥ १०४ ॥

---

१ रुन्धन्तु P L N; रुन्धतु Be; रुन्धन्तुति (!) Bi.—२ after मदीयाः P inserts तदितो गत्वा कार्यशेषं चिन्तयाम.—३ इति साटोपं परिक्रम्य भागु° Ch.—४ Ch K om भोः.—५ अज्जो K P.—६ Be L om. ज्ञायतां.—७ सांवत्सरिकाणां मध्ये N B Ch (sec. h.).—८ P om. द्वारि.—९ को द्वारि M —१० L om. जं° संवच्छरिओ.—११ निष्क्रम्य क्षपणकं दृष्ट्वा P ed. I. II.—१२ M om. अमच्च.—१३ सम्वत्सरिओ N; संवच्छरो B; संवत्सरो P.—१४ आत्मगतम् om. in M; निमित्तं M.—१५ क्षपणकदर्शनम् K Ch ed I. II.—१६ प्रकाशं om. in B P K Ch.—१७ भद्र om. in B K Ch; M प्रका° भद्र कोऽसौ । पुरु । जीवसि॰धी । राक्ष । अबीभत्सदर्शनं कृत्वा.—१८ प्रवेशयैनं P M.—१९ सासणम् all Mss. exc. B.—२० अलहन्ताणं N.—२१ °वज्जह N B P K Ch; °वजह Be (sec. h.); °व॰जह M; °पज्जह Bi.—२२ °वाहि° Mss.—२३ °वेज्जाणं N P K Be Ch; °वे॰जाणं M; °वज्जाणं B; विज्जाणं Bi.—२४ Mss. जे exc. Mys; °मत्त° P M.—२५ पढम] विमुह Be; पमुह M; मुहु॰त Mys; कडुयं Bi.—२६ पच्छा N B K Ch Be Bi; पच्चा P; प॰चा M प॰छा Mys.—२७ पश्च] पत्थं N B M; पथ्यं P; पछं K; पंछं Be; पंढं Ch; पछं Bi. प॰चं Mys.—२८ उवदिसन्ति N Ch M Bi; उअदिसंति B; उअदिसन्ति P K Be.

उपसृत्य[१] । धम्मलाहे शाधकाणं ।

राक्ष । भदन्ते[२] निरूप्यतां तावद्[३]अस्माकं[४] प्रस्थानदिवसः ।

क्षप । नाट्येन चिन्तयित्वा[५] । शाधका[६] णिलूविदे[७] दिवशे[८] । आ[९] मय्यह्णादो णिउत्तशअलदोशा[१०] शोहणा[११] तिघी[१२] भोदि[१३] । शंपुण्णचन्दा[१४] पुण्णमाशी[१५] तुम्हाणं उत्तलाए दिशाए[१६] दक्खिणं दिशं[१७] पस्थिदाणं[१८] दक्खिणदुवालिए[१९] णक्खत्ते[२०] । अवि[२१] अ[२२]

अस्ताहिमुहे[२३] शूले[२४] उदिदे[२५] शंपुण्णमण्डले चन्दे ।

---

१ उपासभा धम्मलाहे दे भोदु N, धम्मलाहे सावकाण भोदु P, साधभा धम्मसिद्धी दे होदु K, धम्मसिद्धी भोदु स्सावगाण Be, सावभा धम्मसिद्धी होदु Ch, सावभाण धम्मलाहो होदु M, धम्मसिधी होदु सावगाण L, Bi corrupt, धम्मशिद्धी होदु शावगाह ed V —२ भदन्त] भद्र P, भवतु तत् K, भवतु भद्रास Ch, M om —३ तावत् K om —४ अस्मत् P Be—५ अवलोक्य विचिन्तयित्वा च N, नाट्येन चित्तो (?) नाटयित्वा B, नाट्येन अवलोक्य निरूप्य च K —६ साधभा K, उवासका P, सावका Bi, सावग Be, सावआ N Ch M —७ णिरूविदे Ch K M (°द) —८ दिवसे N, लग्गे B P Be Ch Bi, K M om, शुहुत्ते ed I. II—९ आ] अ Bi, अज्ज B P Be Ch M, अद्य Grah, अज्ज आ ed. V —मय्यह्णादो] Mss मज्झ° (P अज्ज), मज्झण्हादो Ch, मज्झह्णादो K, मज्झन्दिणआदो M, °ज Bi, अधमध्याह्नादुपरि Grah —१० णिउत्तशअलदोशा] णिउत्तसत्तमकरणा N, णिवुत्तसत्तमकरणा Be, णिवुत्तसत्तमकरणा Ch, णिअत्तशअलदोशा B, णिवुत्तसअलदोसो P णिव्वित्तसत्तकमहादोसा K, णियत्तिअ सत्तमकरणा M, °ण्णादोपहुदिपुण्णाहे णिवुत्तसत्तमकरणा Bi णिवुत्तसयलाणा L, णिव्वुत्तसत्तसकरणा ed II, णिवुत्तसत्तकरणा ed I, णिव्वुत्तशमसलक्खणा ed V, निवृत्तसकल दोषो Grah —११ शोहणा B, सोहणा N Be Ch, सोहण P K M सोभणा L—१२ तिही Ch M Bi —१३ भोदि B K Bi Ch om —१४ सपुण्ण° MSS °चन्द्रा] अन्दा B, om in K M (which has only सपुण्णमासी) —१५ पोण्णमासी P, all Mss °सी instead of शी —१६ दिसाए N P Be Ch M, K om —१७ दक्खिण दिस N P (°णं) Be, दक्खिणदिश B, दक्खिणदिस K M, दक्खिणादिस Ch, दक्खिण दिस Bi—१८ पत्थिदाण N B P K Ch Be (°टि°, in marg छि), M (°थिआण) —१९ दक्खिणदुआलिए N, दक्खिणदुआलिके B, °दुवालिए K, °दुआरिआए P, °वालिके Be, °दुआरिए Ch, °दुवारे M, दक्खिणदुवालिए Bi अदक्खिणे L, अदक्खिणे L—२० णक्खत्ते N B P K Be M (णक्खत्ते), Grah पूर्णिमा युष्माकं उत्तरस्या दिशो दक्षिणां दिश प्रस्थितानां दक्षिणद्वारिके नक्षत्रे The passage seems to have been metrical—२१ अवि य Bi—२२ अत्था N B P K (थो) Be Ch M Bi, °भि° Bi—२३ सूले N P K Ch Be Bi, सूच्चे M —२४ उद्दिदे Be Ch, उदिए M, उदिते P.—२५ शंपुण्ण° B only.

गहवदिसुपक्खे लग्गे उदिदत्थमिदम्मि केदुम्मि ॥ १९ ॥१०५॥

राक्ष । भदन्त तिथिरेव तावन्न शुध्यति ।

क्षप । नाट्येन चिन्तयित्वा । श्रावक ।

एअगुणा होदि तिथी चदुग्गुणे होदि णक्खत्ते ।
चदुस्सट्ठिगुणे लग्गे एसो जोदिसिअतन्तसिद्धन्ते ॥ २० ॥ १०६ ॥
लग्गे होहि सुलग्गे सोम्मं पि गहं जहाहि दुल्लग्गं ।

पाविहिशि दिग्घमाउं चन्दश्श बलेण गश्चन्ते ॥ २१ ॥ १०७ ॥

राक्ष । भदन्त अपरैः सांवत्सरिकैः सह संवाद्यताम् ।

क्षप । शंवादेदु शाधके । हगे वेखु गमिश्शं ।

राक्ष । न खलु कुपितो भदन्तः ।

क्षप । कुविदे तुम्हाणं णं भदन्ते ।

राक्ष । कस्तर्हि ।

क्षप । स्वगतम् । भअवं कैदन्ते येणं अत्तणो पक्खं उज्झिअ पलपक्खं पमाणीकलेशि ।

---

१ पाचिहिदि B, पाविह्सि N, पविहिसि P, पाविहिसि K Ch $B_1$, पावविहसि Be, पाविसिहि M, पाविहि ed I II V, पहोसि ed III L, प्राप्स्यसि Grab Rat—२ दिग्घमाउं N, दीहमाऊ M, दीहमाउं Ch $B_1$, दिघमाउं Be, दिग्घकाहं B, दीहिलाउं P; दीहलाहं, and in a repetition of the passage सव्वसिद्धिं K, सायासिद्धिं b, दीहसिद्धिं L सकलसिद्धि Grab Rat—३ चन्दश्श B only—४ गछन्ते N B M Ch, गछन्तो K $B_1$ Ch (sec. h.), गहन्तो P—५ सांवत्सरिकैः] साधकैः B, सांवत्सरैः P—६ संप्रधार्यताम् Ch—७ शंवादेदु [illegible] only, संवादेउ $B_1$, संपधारेदु Ch, संप्रधारयतु Grab —८ शाधके B, साधआ K, शावके N, सावको Be, सावका $B_1$, सावआ Ch, सावओ M; उवासके P—९ हग्गे वखु B, हगे दाणि P, हग्गे उण K, हगे उण $B_1$ Ch (see h वो) अहम्पुन N, अहं पुण M; ह उण Be—१० गमिश्शं गेहं B, वेहं गमिस्सं h, तहिं गमिस्सं K, गमिस्सं N P Be M $B_1$, गमिष्यामि गृहं Grah—कथं कुपितो M—११ कुविदे K, कुविदो $B_1$, कुपिते N, °विते P Be, कुपितो M—१२ ह्माणं K—१३ Ch ण हु, M K $B_1$ ण before कुपिदो—१४ भअवन्ते कअन्ते N, भअव कअवे M, किदन्ते $B_1$—१५ प्रकाशं before येण in all Mss except N P, B प्रकाशं । तुमं जेय; जेण N B P Be M $B_1$, जो K, Telang's E has य्येव, but the Ms is influenced by Yaśruti—१६ पक्खं] वक्खं N P Be M $B_1$, वक्ख B, पक्खु K—१७ उज्झिअ] उज्झिअ N P K Be (sec. h) Ch M $B_1$ (य); समुज्झिअ B—१८ पलवक्ख B K, पलपक्खं Be, परपक्खं M, परस्स पक्खम् N, पलपक्ख° (!) P, पलस्स पक्ख $B_1$.—१९ पमाणीकलेसि N $B_1$, माणं कलेसि P, पमाणीकलेधा B, पमाणीकरेदि K, पमाणीकरेसीति Be, पमाणं करेसि M, Ch प्रकाशं सावआ असमंजसो एसो जेण अत्तणो वक्खं °परपक्खं पमाणीकरेसि; the same passage is after °कलेसि added in P प्रकाशं उवासका असमञ्जसो वखु एसो अत्तणो पक्खं उवेक्खिअ पलपक्खपमाणीकलेसि; b has तुम्हाणः कुविदे । भअव करदो । प्रकाशं सावआ. असमंजसो. एसो. जो. णं. अत्तणो. पक्खं उझिअ परस्स पक्खं. अमर्णा कलं अदिसि Grah स्वगतं भगवन् (!) कृतान्तः । तामिति त्वमेव कुपितः येनात्मनः पक्षं मम मत परिहृत्य परपक्षं प्रमाणीकरोषि.

इति निष्क्रान्तः क्षपणकः ।

राक्ष । प्रियंवदक ज्ञायतां का वेला वर्तत इति ।

प्रियं । जं अमच्चो आणवेदि । इति निष्क्रम्य पुनः प्रविश्य च । अमच्च अत्थाहिलासी भअवं सूरो ।

राक्ष । आसनादुत्थाय विलोक्य च । अये अस्ताभिलाषी भगवान् भानुः । तथा हि

आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः
पर्णच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा ।
एते तस्मिन्निवृत्ताः पुनरपरककुप्प्रान्तपर्यस्तबिम्बे
प्रायो भृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः ॥२२॥१०८॥

इति निष्क्रान्ताः सर्वे ।

१ का वेला वर्तते ज्ञायतां K; ज्ञायतां कस्समयो [समयो] दिवसस्येति M; P om. इति.—२ जं अ° आ°] ऊर्ध्वमवलोक्य अमच्च° B P.—३ अ०थाभिलासी M; °लाही Ch; अय्ये अत्थाभिलासी Bi.—४ भगवं P.—५ सूले Be ed. I. II.; सूलो K —६ अस्ताचललग्नी P.—७ भानुः] सूरः B; सूर्यः P; भास्करः Be M Bi (ins. इति after it); सहस्रदीधितिः ed. I II.—८ तथा हि] संप्रति हि P Be M; ed. III. V.—९ °अनुरागैः P Bi.—१० पत्र°पर्ण° Be ed. III. पूर्ण° M; पूर्णछाया P.—११ °तरुभिः P.—१२ गत्वा ] त्यक्ता P.—१३ एतैः.—निवृत्तं Bi.—१४ अपि ककुभः Be; इतरककुप् ed. I. II; अपरगिरि Bi; अपरगिरिप्रांतपर्यंतबिम्बे L.—१५ स्वामिनं] छायया B P; Grab. knows of both readings.—१६ सेव्यमानाः B P.

ततः प्रविशति लेखमलंकारस्थगिकां च मुद्रितामादाय सिद्धार्थकः ।

सिद्धा । ही माणहे ।

बुद्धिजलणिज्झरेहिं सिञ्चन्ती देसआलैकलसेहिं[4] ।
दंसिस्सेदि कर्जफलं गरुअं चाणक्कणीदिलदा ॥ १ ॥ १०८ ॥

गहिदो मए अज्जचाणक्केण पढमंलेहिदो [11]लेहो अमच्चरक्खसस्स मुद्दालंछिदो[12] । तस्स जेवं[13] मुद्दालंछिदा इँअं[14] पि आहरणपेडिआो[15] । चलिदो[16] किल

१ भद्रपारस्थगिगाश्चोद्वहन् गृहीतमुद्र॰ N, लेखालङ्कारस्थगितां लेखमुद्रामादाय P, लेख-मलंकारस्थगिकासमुद्रां समादाय K, अलंकरण Be (orig) Ch, समुद्रं लेखमलंकारपेटिकां चा-दाय M.—२ सिञ्चन्ती N P K Be —३ °काल K Be Ch M —४ कलसेहिं] जलहेहिं M N (गुहिं), घडपुहिं K b Ch, मेघेन (मेघै) Grab. Vat —५ दंसिस्सइ B, दसेहिअ P, दंसेइ K M, दंसिस्सइ Ch, दंसिसइ Be, दंसइस्सदि ed. L H, दंसेदि ed. V —६ कज्ज] अज्ज N K Ch (orig) M, Grab quotes both readings.—सुफलं K, फलअं M —७ णीइ Be M, णीति Ch.—°लआ B K M —८ गहिदो B P Ch, गहिओ M, गिहिदो N, गेहिदा K, गिहिओ Be (गि sec. h.) —९ अज्ज°] अमच्च° K, M om —१० पढम] पुढम M, पढमं P, om in K, कपड° B, कपट° Grah —°लेहिदो N, °लेहाविदो B, °लिहाविदो P, लिहिदो K Ch, लिहिदो Be, °लिहितः M, °लिखापितो (v. l. निधापितो) Grah —११ N K Ch om here लेहो.—१२ °लंच्छिदो] लंकिदो N K Ch (लंकिदो अअं लेहो); °लंछिओ लेहो M, °लंछिओ अयं लेहो Be, अमात्यराक्षसस्य मुद्रालंछितोऽयं लेखो लांछितश्चित्त Grah —१३ M om. तस्स जेव, जेव्व Ch. लंछिया Be; °लंछिदाइ आहराइं P °कि° K —१४ इयं च B, इअं च Be, °लंकिदा इयं च Ch, इयमपि Grah, [पि] N M om, च K—१५ आभरण K Be Ch, °पेडिआ] पिसेवआ N, पवेथिअ K, पसेविआ Ch, Grah has प्रसेविका [प्रसेविका] and प्रासनिका.—१६ चलितो B, चलिओ K

म्हि[1] पाडलिउत्तं[2] । ता जावं[3] गच्छामि[4] । परिक्रम्यावलोक्य च । कधं[5] खवणओ आअच्छदि[6] । ता[7] जावं से असउणभूदं दंसणं सुद्धदंसणेण पडिहरामि[8] ।

ततः प्रविशति क्षपणकः ।

क्षप । अलिहन्ताणं[9] पणमिमो[10] ये[11] दे[12] गम्भीलदाए[13] बुद्धीए ।
लोउत्तलेहि[14] लोए शिद्धिं[15] मग्गेहि[16] मग्गन्ति[17] ॥ २ ॥ १०९ ॥

सिद्धा । [18] भदन्त वन्दामि[19] ।

क्षप । शावका[20] धम्मलाहे[21] दे[22] भोदु[23] । निर्वर्ण्य[24] । शावका[25] अस्ताणशंतलण-[26]

---

१ म्हि किल K, Ch, म्हि किल B किळ अह M —२ पाडलिपु०त्त ए०य M —३ जाव om in B M —४ गच्छह्मि ed I II —५ कथ K Ch, कह Be, अअ एव° M —६ आअच्छइ M —७ P Be M om ता, B om जाव —८ इम दसण दत्त [भद ?] दसणेण पडिहणामि N, भदन्तस्स दसण तावद्दसणेण पडिहलामि B इम दसणेण पडिहालामि K, दसण अस्सद न्तदसणेण पडिहरामि P, इम वासणेण पल्हिलामि Ch, दसण भद्दस दसणेण पडिहणामि Be, दसण भद्दसणेण परिहरामि l । M has only जाव से आअमण पडिवालेमि, Grah यावदस्यासकुनभूत सदर्शनमिद तस्मात् शुद्धदर्शनेन परिहरामि आदित्यादिदर्शनेन दूरीकरोमि, Rat आदित्यादिदर्शनेन दूरीकरोमीत्यर्थ , Telangs E has सुद्ध, हि इमस्स दसण ता आदित्तदसणेण पडिहणामि ed I इमस्स दसण ता आ° पडि° ed II, दसण मह समदमेव्व ता ण पडिहरामि L III, दसण मह समद दयेव ता णा पडिहरामि ed. V cf Gautama Dh. S 23 22 —९ अलिहन्ताण B P Be Ch (orig) °न्ताण K Ch (sec. h), अलहन्ताण N L, अलुहन्ताणा M —१० पणममि N L, पणमामो ed I II V Grah, पणमामि ed III —११ जे Mss. —१२ दे K Ch om, ते Be —१३ गम्भीरदाए N P, °ताइ (in marg ए) Be, °गम्भीलाए K, गम्भिलाए सु (or क्तु) बुद्धीए Ch —१४ लोउत्तलेहिं N P, लोउसेणेहिं B, लोउत्तोलेहि K, लोउत्तलेहि Ch Be (sec h हिं), °रेहि M —१५ सिद्धिं N P K Be, सिद्धि Ch M —१६ मग्गेहिं N B P K, मग्गेहिं Be मग्गेहि Ch M —१७ मग्गन्ति] गच्छन्ति Be L —१८ उपसृत्य B ins —१९ वन्देमि K Ch, पणमामि B —२० शावका B, सावआ K, शावका N, सावगा Be, सावआ Ch सावअ M, उवासका P —२१ धम्मलाहो N Ch M, ed I II धम्मसिद्धी K L, धम्मविधी b, धम्मविद्धी Be —२२ दे B P Bo om —२३ होदु Ch M —२४ सिद्धार्थक निर्वर्ण्य M —२५ शावका B, सावआ h सावक Grah, शावका N, सावगा Be, सावआ Ch, उवासका P, om. in M —२६ अट्ठान समुद्दतलणे N, आट्ठाणसमुद्दसन्तलणे B, अट्ठाणगमणसमुद्दमन्तलण° P, अट्ठणसमुद्दतलण° K, अट्ठणसमुद्दतलणे Ch (ट्ठा see h), अट्ठाणसमु द्दण in marg द्दतलणे Be, अ०धाणसमुप०णव सपयमाभ M, पश्चाणसमुद्दहणे L पस्ताणसमु०द्दहणे Mys. अट्ठाणसमुद्दतलणे I, पस्ताणसमुद्दहणे ed V, अस्थानगमनसमुद्रतरणे Grah समुद्रतरण seems to be a mere gloss.

कद्[1]व्ववशाअं[2] विअ[3] दे[4] पेस्कामि[5] ।

सिद्धा । कधं[6] भदन्तो जाणंदि[7] ।

क्षप । शाधकां[8] किं एत्थं[9] याणिदव्वं[10] । णं[11] एशे[12] य्येव[13] दे मग्गादेशकुशले शउणे कलगदे अ लेखे शूँचेदि[14] ।

सिद्धा । आं[15] जाणिदं भदन्तेण । देसन्तरं[16] चलिदो[17] म्हि । ता कधेदु[18] भदन्तो[19] । कीदिसो[20] अज्ज दिवसो[21] त्ति ।

---

१ कद् N Ch, किद् B P, कअ K Be —२ वयसाअ B, ववसाअ P Ch N (°सास्स), ववसाय Be, ववसाअसु (!) K, °पयसाअ M —३ इअ N, विअ Be K om —४ दे P Ch om, तुम M L ed III, दे हिअअ ed I. II —५ पेक्खामि Mss, कृतव्यवसायामिव त्वा पश्यामि Grah.—६ कअ M, the text from कध to जाणिद om in K.—७ जाणदि N ■ P, जाणादि Be, जाणेदि Ch, जाणइ M (cf Pischel§ 510)—८ शाधका B, साधका N, सावका Be, सावआ Ch, सावअ M, उवासके P—९ एत्थ] एत्थ B—१० जाणिदव्व N ■ Be Ch M, °दव्वेण P—११ णं] ण N, P B Be Ch om —१२ एसे N P Be Ch, एसो M—१३ य्येव] एव N, जेव B, P Be Ch M om —कण्ठदेय[श]णिवेसिदे लेहमाले N मग्गदेसणोकण्णधाले (णो alt to ले, in margins लह) कण्ठदेसणिवेसिदे लेहे Ch मग्गकुशल कण्णदेशणिवेणिदे [ले]हे B, मग्गणिरसे वेहे P, om in K, मग्गदेसणौकण्णधारे कण्ठदेशणिवेशिदे लेहे Be, मग्गणाभोकण्णधारे B, मग्गदेसणकण्णधाले Dhruva a S Telang a ■ मग्गादेशकुशले शउणे कलभदे लेहे अ शूएदि Mys, एसो दे मग्गदेसकोसलस्स कण्णधालो लेहो l, मग्गदसणकुसलो लेहो M, मग्गकणधाले लेहे b, मग्गणाकण्णधारे ed I मग्गणाभोकण्णधारे ed II मग्गादेशकुशले करगदे लेहे अ ed V मग्गादेसकुसलो सउणो करगदो लेहो अ L (शद°) ed III, ते मार्गकुशलस्य कर्णदेशनिवेशितो लेख Grah, कर्णमूलनिहितो लेख Rat —वाहिदो मए इत्यादि सर्वस्मिन्नेव कार्ये शकुन मङ्गलव्यपत तेन शोभनमशोभन वा ज्ञायत इत्याह कथ क्षपणक Vat)—१४ सूचेदि N Be, सूएदि P M, सूअदि Ch (orig) L—१५ आ N P, आ ■ Ch, om in Be M, Ch ms. ता —१६ देसन्तर N, देसान्तल म्हि P, देसन्तलं म्हि M —१७ चलिदो] पत्थिदो [प्रस्थित] B, पत्थिदो म्हि L, म्हि पथत्थिदो Be, देसतरम्हि पत्थिदो Ch, देशान्तर खलु प्रस्थितोऽस्मि Grah —१८ कहेदु Be Ch, कहेहि M —१९ भदन्ते M —२० कीरिसो Be, कीदिसो M—२१ दिनहो B, दिअहो b, दिअहे P, दिअहो Ch, दिअसो N K M L, Cf Pischel § 264

क्षप । विहस्य । शाधकां[1] मुण्डं मुण्डिअं[2] णक्खत्ताइं[3] पुंच्छशि[4] ।

सिद्धा । भदन्त संपदं[5] पि किं[6] जादं । तं[7] कधेहि[8] । जइ[9] अणुऊलं[10] भविस्सदि[11] तदो गमिस्सं । अण्णधा[12] णिवत्तिस्सं[13] ।

क्षप । शाधकां[14] ण शंपदं[15] एदस्सिं[16] मलअकेदुकडए[17] अणुऊलेण[18] अणणुऊलेण[19] वा गच्छीअदि[20][21] ।

सिद्धा । भदन्त तदो कधं खु दाणिं[22] ।

क्षप । शाधकां[23] णिशामेहि[24] । पढमं[25] दाव एत्थ कडए[26] लोअश्श[27] अणिवालिदे[28] णिक्कमणप्पवेशो[29] आशि[30] । इदाणिं[31] इदो पच्चाशण्णे[32]

१ साधका N P, साधआ K, सावगा Be, साचआ Ch, M om —२ मुण्ड मुण्डिअ P ed I II, णिवादिदे मुण्डिअ N, मुण्डाविअमुणो B, मुण्डाविदमुण्डे b अब्रमुण्डाविअमुण्डो K, मुडिअ मुडो L, मुडितमुडो विय Be, मुण्ड मुदाविअ Ch ed V, मुण्डिअ मुण्डो ed. III, पतिअ मुहा मुण M —३ पच्छा णक्खत्ताइ N, प° °इ K, णेक्खत्ताइ B, णकाइ P, णक्खत Ch, ण०ख०ताणि M —४ पुच्छसि N P K Ch M, पुच्छेशि B, पुच्छेसि b, पुच्छसि Be (in marg)—५ पि N Ch. om, सपदमि K, सम्पअम्मि B —६ कि जाद] कीरिसो त्ति M —७ ता M om —८ कहेहि N Be (in marg) Ch M, कधेदु K —९ जदि N, यदि Be —१० Before अणुऊल K ins इअत्ताणअस्स, Ch पत्थाणस्स, प०त्थाण०स्स जदि Mys, पट्ठाणस्स b, अत्तणो ed I II —अणुकूल N, दिननक्षत्रम् Gmh.—११ भविस्सिदि M —तदो] ता Cb —१२ अण्णहा K M, अधवा P, L om अण्णधा णिव त्तिस्स —१३ णिअत्तिस्स K —१४ साधका N, साधआ K, सावग Be, साधआ Ch, M om उवासके P, सावकाण ed II, उवासकाण ed I, inserting ण later on, P om ण —१५ सपद all Mss except B —१६ एदस्सिं B, एदम्मिम् N, एदस्सि M—१७ °अडए P —१८ अणुकूलेण P N, अणुऊले M —१९ B om N P b अणणुकूलेण, अणुऊल ण भविस्सदि L—२० K वा आहिदसुहेण, ed I अगहीदमुहो ण गच्छीअदि, अगहिदमुहो ण गच्छीअदि ed II —२१ गच्छीअदि B (adding त्ति) K Be, गच्छीअदि त्ति N, गछीअदी Ch, गच्छअसि P, गच्छीअसि M —२२ दाणि N B, क्खु इदाणीं P (omitting तदो), कथ क्खु दाणि K, तदो कहि खु दाणि Be, कथ क्खु दाणि Ch, अह कह खु दाणि करिस्स (?) M, कहेहि कुदो क्खु अज ed II, भदन्त तदो कध क्खु दाणी ed I, कहेहि कुदो एदम् L ed III V —२३ साधका N, °आ K, मावगा Be, सावका b, सावआ Ch, M om, उवासका P —२४ णिशाम्मेहिं B, णिसामेहि N P K Be Ch M —२५ पढुमन् B, पुढम M —२६ मलअकेदुकडए K b Ch (orig मलय°) M (मळ) —२७ लोअस्स N b P K Be Ch, सव्वलोआण M—२८ अणिवारिदो N K Ch, अणिवालिदा P, अणिवालिआ Be, अणिवारिदा M —२९ णिग्गमण पवेसो N, णिक्कमणपवशे B, णिक्कमणपवेसा P, णिक्कमपवेसो K, णिग्गमपवेसा Be, णिग्गमपवेसो Ch, णिग्गमप्पवेसा M —३० आसि N P K Be Ch, होन्ति M —३१ इदाणि N, दाणीं K, दाणि Ch, सपद M—इध P —३२ पच्चासण्णे N P K Ch M, आसण्णे Be

